**यदिदं पुरुषावश्यं तत्र तत्र पतेन्मनः ।**
**केन तत्प्रेरितं याति प्राणः सर्वोत्तमस्तथा ॥**

**चक्षुः श्रोत्रं तथा वाचं को देवो विनियोजयेत् ।**
**इति पृष्टस्तदा ब्रह्मा प्राह देवमुमापतिम् ॥**

**ध्यात्वा नारायणं देवं सर्वाधारमनूपमम् ।**
**सर्वज्ञं सर्वशक्तिं च सर्वदोषविवर्जितम् ॥**

**व्यासतीर्थीयम्–** इषितमिष्टं साध्वसाधु वा प्रति मनः पतति तत्करणत्वान्मनसः स्वतो न युक्तम् । अतः केन प्रेषितं प्रेरितं पतति । प्रथमो मुख्यः । युक्तो नियुक्तः । इमां वाचं केन इषितां प्रेरितां वदन्ति । चक्षुः श्रोत्रं क उ देवो युनक्तीति प्रश्नः । यन्मनआदिप्रेरकं त्वया पृष्टं स उ इति परिहारश्च प्रतीयते । प्रष्टा उत्तरप्रदाता च काविति न ज्ञायते अतस्तत्प्रश्नवाक्यं व्याचष्टे- **वैजयन्त इति ॥** वैजयन्तो नाम कश्चित्पर्वतः । इतः पूर्वं कस्याप्यप्रकृतत्वात् स उ इति कथं तच्छब्देन परामर्श इत्यतो ध्यानस्य प्रकृतत्वेन तद्धटयन् श्रोत्रस्य श्रोत्रमित्यादिपरिहारवाक्यं व्याचष्टे- **ध्यात्वेति ॥**

**वामनटीका–** एवं चेन्मीमांसकेषु देवेषु कतमः 'केनेषितम्' इति प्रष्टा? परिहर्ता च गुरुः कतमः? किं चेदं विचार्यमाणं विलक्षणं वस्तु? इत्याकाङ्क्षायामुच्यते । सदाशिवः प्रष्टा । परिहर्ता चतुर्मुखः । विचार्यमाणं विष्ण्वाख्यं ब्रह्म । तदेतत् सर्वं भगवान् भाष्यकारो ब्रह्मपारवचनेन सुव्यक्तं वक्ति– 'वैजयन्ते समासीनम्' इत्यादिना । वैजयन्ताख्ये पर्वते । सत्पुरुष निर्दोषपुरुष, सर्वज्ञपुरुष । 'सन्मनीषी' इत्यभिधानात् । सतां जन्मादिकृदधिपते गुरो । 'इषितं' वाञ्छितम् । इषु इच्छायामिति धातोः । 'प्रेषितं' प्रेरितम् । स्वेच्छया प्रेरितमित्यर्थः । 'युक्तः' नियुक्तः । विनियोजयेत् विषयेषु प्रवर्तयेत् । नारायणं ध्यात्वेति वचनं शयनासनाद्युपकार्येऽपि तद्ध्यानपूर्वकत्वेन भाव्यमित्युप-लक्षयति । 'स्मृत्वा हरिं समुत्थाय' इति सदाचारस्मृतेः । अनूपमं अत्यन्तानुपमम् । 'आधिक्येऽधिकम्' इति सूत्रात् ।

**प्रकाशिका-** वैजयन्तो नाम बहुयोजनवान् मेरोः शृङ्गविशेषः । तत्राप्येकं ब्रह्मणो मन्दिरमस्ति । तत्राऽसीनं ब्रह्माणमित्यर्थः ।

'केनेषितं पतति प्रेषितं मनः'इत्यादिना मनआदीन्द्रियाणां प्रवृत्तिप्रेरकः क इति प्रश्नः क्रियते । इन्द्रियाणां स्वस्वविषयेषु गमनस्य स्वाभाविकत्वाद्व्यर्थोऽयं प्रश्न इति न मन्तव्यम् । इन्द्रियाणां जडत्वेन घटवत् स्वतःप्रवृत्त्ययोगेन प्रवर्तकप्रश्नस्य न्यायप्राप्तत्वात् । तर्हि तत्तज्जीवा एव स्वस्वेन्द्रियाणि प्रवर्तयन्तु, चेतनत्वेन तेषां प्रवर्तकत्वसम्भवादिति च न मन्तव्यम् ।

**वि मे कर्णा पतयतो वि चक्षुर्वी३दं ज्योतिर्हृदय आहितं यत् ।**
**वि मे मनश्चरति दूर आ धीः किंस्विद्वक्ष्यामि किमनू मनिष्ये ॥'**

ऋ.६-९-६

इति कर्णादीन्द्रियाणां तत्तज्जीवानधीनत्वोक्तेः । मनआदीन्द्रियप्रेरकैरिन्द्रियाभिमानिदेवैर्मनआदीन्द्रियाणां प्रवृत्तिरस्तु । किं प्रेरकान्तरप्रश्नेनेति चेन्न ।

**निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।**
**न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवञ्चित्रमर्च ॥'**

ऋ.१०-११२-९

इति श्रुत्या इन्द्रियगणप्रवर्तनाय सर्वेन्द्रियगणाधिपतेरेकस्येन्द्रिगणेषु निषुसीदेति सन्निधानस्य प्रार्थनात् । तदुक्तम् भागवते-

**अन्तर्बहिश्चाखिललोकपालकैरदृष्टरूपो विचरस्युरुश्च नः ।**
**स ईश्वरस्त्वं य इदं वशे नयन्नात्मा यथा दारुमयीं नरः स्त्रियम् ।**
**यं लोकपालाः किल मत्सरज्वराः हित्वा यतन्तोऽपि पृथक् समेत्य च ।**
**त्रातुं न शेकुर्द्विपदश्चतुष्पदः सरीसृपः स्थास्नु यदत्र दृश्यते ॥'इति ।**

इदं च मत्स्यतनुं हरिं प्रति मनोः प्रार्थनम् । अत इयमुपनिषत् प्राकृतभाषया यामिकसनाम्ना शङ्काकृतश्चोरान् दूरे धुनोतीत्यत उपपन्नतरः प्रश्न इति श्रुतेरभिसन्धिरनुसन्धेयः । 'केनेषितं पतति प्रेषितं मनः । 'इत्यादेरर्थमाह-

**यदिदमिति** ॥ मन इषितमिष्टं प्रति केन प्रेषितं प्रेरितं पतति गच्छति । स्वानभीष्टस्वजिह्वादंशनादावपि मनसः प्रवृत्तिदर्शनात् पततीत्युक्तम् । बलात्पततीत्यर्थः । स्वादुतरवस्त्वास्वादनसमये हरिं विस्मृत्य स्वतृप्तिमेवोद्दिश्य तत्स्वादुस्वीकाराख्यदोषपरिहाराय बलात् स्वभक्तकृपालुना हरिणा प्रेरितं मनस्तत्र बलाद्गच्छतीति भावः । इदमपि पदं प्रेरकान्तरावश्यम्भावसूचकम् । अत एवाऽह भगवान् भाष्यकारः- **पुरुषावश्यमिति** ॥ पुरुषेण वशीकर्तुमशक्यम् पुरुषावश्यमित्यर्थः । मन आदीन्द्रियाभिमानिदेवैस्सह पठितोऽपि प्राणो न तत्समानयोगक्षेम इति भावेनोक्तम्- **प्राणः प्रथम इति** ॥ तस्यार्थमाह- **सर्वोत्तम इति** ॥ सर्वेभ्य इन्द्रियाभिमानिदेवेभ्योऽप्युत्तम इत्यर्थः ।

'स उ प्राणस्य प्राणः'इत्यत्र प्राक्तस्यापि परामर्शाभावात्तच्छब्दः स्वबुद्धिस्थवस्तुपरामर्शीति भावेनोक्तम्- **ध्यात्वेति** ॥

**॥ इति प्रथमःखण्डः ॥**

**वे.विवरणम्–** ननु श्रुतौ केनेषितमित्यादिप्रश्नः श्रोत्रस्य श्रोत्रमित्यादिपरिहारश्च प्रतीयते । तत्र प्रष्टा परिहर्ता च काविति न ज्ञायते । अतस्तौ दर्शयति- **वैजयन्त इति** ॥ वैजयन्तो नामान्तरिक्षस्थं ब्रह्मसदनम् । 'जयन्तन्त्वन्तरिक्षगम्'इति वचनात् इदानीं केनेत्यादिप्रश्नवाक्यं व्याचष्टे- **यदिदमिति** ॥ तत्र तत्र साधुष्वसाधुषु वा विषयेषु । अनेनेषितमित्येतदुक्तार्थम् । प्रेषितमित्यस्यार्थः प्रेरितमिति । न च मनः स्वत एव याति करणस्य कर्तृप्रयोज्यत्वनियमात् । न च जीवप्रेर्यं मनः तदवश्यत्वादित्याह- **पुरुषावश्यमिति** ॥ न च मुख्यप्राणो जीवप्रेरित एव यातीति वाच्यम् । तस्यास्मदादिसर्वजीवोत्तमत्वात् । नच स त्वत्प्रेरितः त्वत्समत्वात् । नापि रमाप्रेरितः तस्या अपि परतन्त्रत्वेन मुख्यतः प्रेरकत्वायोगादिति भावेनाह- **सर्वोत्तम इति** ॥ अनेन प्रथमशब्दो व्याख्यातः । उपलक्षणमेतत् । तथाशब्दः केन प्रेरितो यातीत्यस्यानुकर्षणार्थः समुच्चयार्थो वा । समुच्चयार्थकद्वितीय- तथाशब्देन श्रौत उशब्द उक्तार्थः । चक्षुरादीनां जीवावश्यत्वस्य प्रत्यक्षत एव सिद्धत्वात् । स्वान्तत्र्यादिलक्षणक्रीडावान् देव एव तन्नियामको वक्तव्यः । स क

इत्यर्थः । यदि नारायण एव मनआदिप्रेरकः तर्हि स किंलक्षणक इति प्रश्नाशयः । श्रुतौ तस्मै सहोवाचेत्यादिपरिहारवाक्यत्वज्ञापकाभावाच्छ्रोत्रस्य श्रोत्रमित्यादि-परिहारवाक्यमिति न प्रतीयते । अतो मध्ये वक्तव्यमाह- **इति पृष्ट इति ॥**

ननु यच्छ्रोत्रस्य श्रोत्रं त्वया पृष्टं तत् स उ स एवेति परिहारवाक्ये स इति कस्य परामर्शः । पूर्वं कस्याप्यप्रकृतत्वादित्यतः चतुर्मुखध्यानप्रकृतनारायण-परामर्शोऽयमिति भावेनाह- **ध्यात्वेति ॥** यद्वा भगवत्स्वरूपोपदेशाय वक्ष्यमाणोपनिषत्प्रतिपाद्यगुणवद्भगवद्ध्यानलक्षणं मङ्गलं कृतं ब्रह्मणेत्याह- **ध्यात्वेति ॥** श्रोत्रस्य श्रोत्रमित्यादिना तत्र तत्र स्थितस्य तत्तन्नियामकोक्त्या वा 'यदिदमुपासते' इत्यनेन विनियामकतया तत्तज्जीवसमीपस्थत्वोक्त्या वा 'येन प्राणः प्रणीयते' इति सर्वनियामकप्राणनियामकत्वोक्त्या वा सर्वाधारत्वम् । 'अन्यदेव तद्विदितात्' इत्यादिनाऽनुपमत्वम्, 'येन वागभ्युद्यते' इत्यादिना सार्वज्ञं पूर्वोक्तरीत्या तत्तन्नियामकत्वोक्त्या वा 'ब्रह्म ह देवेभ्यो विजिग्ये' इति सर्वदैत्यदानवजयोक्त्या वा सर्वशक्तित्वम् । 'यत्प्राणेन न प्राणिति' इति पारतन्त्र्याभावोक्त्या तदुपलक्षितसर्वदोषवर्जितत्वं चोक्तमिति ज्ञेयम् ।

**वे.श्रुत्यर्थः–** सदाशिवो ब्रह्माणं पृच्छति- **केनेति ॥** मनः केन प्रेषितं प्रेरितं सत् इषितं इष्टं साध्वसाधु वा प्रति पतति याति । मनस्तावत्करणत्वात्केनचित्प्रेर्यम् । न च जीव एव तत्प्रेरकः मनसस्तदधीनत्वेनादर्शनात् । अतो जीवभिन्नः कश्चित्तत्प्रेरको वाच्यः स क इति भावः । प्राणो मुख्यप्राणः केन युक्तो नियुक्तः प्रेरितः प्रैति प्रकर्षेण स्वव्यापारं करोति । न च तस्य कश्चिदस्मदादिजीव एव प्रेरकः । तस्यास्मदादिसर्वोत्तमत्त्वादिति भावेनाह- **प्रथम इति ॥** सर्वजीवोत्तम इत्यर्थः । तव तु तत्समत्वात् । रमायाश्च परतन्त्रत्वान्न मुख्यतस्तत्प्रेरकत्वम् । मुख्यप्रेरक एव मया पृष्ट इति भावः । इमां प्रमाणप्रसिद्धां वाचं केन देवेनेषितां प्रेरितां वदन्ति विद्वान्सः । उ शब्दश्चशब्दार्थः । चक्षुःश्रोत्रं चेति सम्बन्धः । द्वन्द्वैकवद्भावोऽयं भिन्नपदं वा । युनक्ति प्रेरयति । वागादीनां जीवानधीनत्वदर्शनात् कश्चिद्देवो नियामको वाच्यः स च क इत्यर्थः । यदि मनआदीनां प्रेरको देवो नारायणस्तर्हि स किंलक्षणक इत्याशयः । अत्र मनोवाक्चक्षुःश्रोत्रशब्दैस्तदभि-

मानिदेवाश्च ग्राह्याः । अत एव मुख्यप्राणप्रेरकप्रश्नो युक्तः । अन्यथेन्द्रियप्रेरकप्रश्नप्रस्तावेऽनिन्द्रियभूतमुख्यप्राणप्रेरकप्रश्नोऽसङ्गत इति ज्ञातव्यम् । उपलक्षणमेतत् । इतरेन्द्रियनियामकप्रश्नोऽपि द्रष्टव्यः ॥१॥

## नृसिंहभिक्षुविरचिता उपनिषदार्थप्रकाशिका

**व्यासतीर्थोक्तिमाश्रित्य श्रीपूर्णप्रज्ञनामकम् ।**
**नत्वा तं तलवकारोपनिषदर्थः प्रकाश्यते ॥**

इह हि अमुत्र फलभोगविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणो अनिष्टनिवृत्तये परमानन्दावाप्तये च सर्वोत्तमत्त्वेन वासुदेवं प्रतिपादयितुं तलवकारोपनिषत्प्रवृत्ता । तत्रादौ वैजयन्तपर्वताख्यस्वस्थाने समासीनं चतुर्मुखमुमापतिः पृच्छति- **केनेति** ॥ इषितमिष्टं साध्वसाधु वा प्रति पतति प्रवर्तत । तत्प्रवर्तनम् मनसो अस्वतन्त्रत्वात्स्वतो न युक्तं अतः केन प्रेषितं प्रेरितं पतति । प्रथमः प्राणो मुख्यो वायुः केन युक्तो नियुक्तः प्रैति सर्वव्यापारेषु प्रवर्तते । केनेषितां केन स्वतन्त्रपुरुषेण प्रेषितेन वागभिमानिदेवेन प्रवर्त्यमानां इमां श्रूयमाणां वाचं जना अभिवदन्ति । चक्षुःश्रोत्राभिमानिदेवौ क उ देवः कः स्वतन्त्रदेवः युनक्ति प्रेरयति ॥१॥

**स.भाष्यविवृतिः–** केनेषितमित्यादौ पृच्छकोत्तरदातारौ नैव संविदाते । तावददर्शत्- **वैजयन्ते समासीनमिति** ॥ वैजयन्तः पर्वतविशेष इति व्यासतीर्थीये । वैजयन्तो नाम अन्तरिक्षस्थब्रह्मसदनम् । जयन्तन्त्वन्तरिक्षकमितिवचनादिति वेदेशीये । अत्र एकान्ते इत्यनेन ब्रह्मोपदेशस्य अनाविष्कार्यत्वमनाविष्कुर्वन्नन्वयादिति सूत्रोक्तमसुसूचत् । हिरण्यगर्भमित्यनभिधाय चतुराननमित्युक्त्या च वाक्वमत्कृतिमदाननत्वं च चतुरशब्दस्य दक्षाभिधायकत्वात् दक्षे तु चतुर पेशलपाटव इति ह्यभिधानम् ।

सदाशिवः ब्रह्माणमपृच्छत्- **केनेषितमिति** ॥ मनः पुरुषप्रयत्नागोचरः केन प्रेरितं सत् इषितमिष्टं साध्वसाधु वा प्रति पतति याति । प्रथमः प्राणः मुख्यो वायुः केन युक्तो नियुक्तः प्रेरितः प्रैति सर्वव्यापारेषु प्रवर्तते । केन इषितां केन

स्वतन्त्रपुरुषेण प्रेरितेन वागभिमानिदेवेन प्रवर्तमानामिमां श्रूयमाणां वाचं जनाः अभिवदन्ति । चक्षुःश्रोत्रं च को देवो युनक्ति प्रेरयति । अत्र मनोवाक् चक्षुरादिशब्दैः तदभिमानिदेवा रुद्रादयो ग्राह्याः । इन्द्रियप्रकरणे प्रथमः प्राण इति मुख्यप्राणस्यापि प्रश्नात् ॥१॥

**वरदतीर्थीयम्-** तत्र केनेषितं पतति इत्यादिप्रश्नवाक्यस्य 'श्रोत्रस्य श्रोत्रं' इत्यादि परिहारवाक्यस्य च कर्तुरविज्ञायमानत्वात् तत्स्वरूपं ज्ञात्वार्पयन्नेव चोद्यपरिहारवाक्ये व्याचष्टे- **वैजयन्ते इत्यादिना** । श्रोत्रादिप्रेरकस्य पूर्वमप्रकृतत्वात् कथं तस्य 'स उ प्राणस्य प्राणः' इति तच्छब्देन परामर्शः इत्यत्र बुद्धिसन्निहितत्वादेव न तु ग्रन्थप्रकृतत्वादिति भावेनाह- **ध्यात्वेति** । अनेनैव तदुपनिषदो ब्रह्मा ऋषिः, नारायणो देवता इति चोक्तं भवति ।

**व.उ.मन्त्रार्थः-** मनः मनइन्द्रियं केन पुरुषेण प्रेषितं सत् प्रेरितं सत् इषितं इष्टं पदार्थं प्रति पतति गच्छति । स पुरुषः कः ? । प्रथमः प्राणो मुख्यप्राणः पुरुषेण नियुक्तः सन् प्रैति प्रकर्षेण वर्तते । यां चेमां वाचं वागिन्द्रियं अभिवदन्ति जनास्तं वाचं केन पुरुषेण इषितां प्रेरितां वदन्ति । चक्षुः श्रोत्रं को देवो युनक्ति स्वस्य विषये योजयति सोऽपि क इति ॥१॥

अयं भावः । मनआदीनां करणत्वेनावश्यं कर्तृप्रेर्यतानियमात् प्रेरकः कश्चिदङ्गीकार्यः । न च जीवेन प्रेर्याणीति युक्तम् । अनिच्छतोऽपि विषयदर्शनान्तस्येन्द्रियवशीकरणायोगात् । अत एषां मनआदीनां मुख्यतया यः कर्ता प्रवृत्यादिकर्ता पुमान् तं व्याचष्टे ।

## श्रीराघवेन्द्रयतिविरचितः तलवकारोपनिषत्खण्डार्थः

**अनन्तगुणपूर्णाय दोषदूराय विष्णवे ।**
**नमः श्रीप्राणनाथाय भक्तेभ्योऽभीष्टदायिने ॥**

अस्या उपनिषदो विरिञ्चिशिवसंवादरूपत्वात्तावत्र ऋषी ज्ञेयौ । देवता तु ब्रह्मशब्दोदितो विष्णुः । छन्दस्त्वक्षरपरिगणनया त्रिष्टुबादि यथायोग्यं ज्ञेयम् । जानन्नप्युमापतिर्विशेषज्ञानार्थं वा, ज्ञातस्य दाढ्यार्थं वा, लोकानुग्रहार्थं वा

सर्वेन्द्रियप्रेरकं पृच्छति ब्रह्माणं- **केनेत्यादिना** ॥ इषितम् इष्टं साध्वसाधु वा प्रति मनः केन देवेन प्रेषितं प्रेरितं सत् पतति गच्छति । करणत्वादवश्यं केनचित् प्रेरितमिति वाच्यम् । न तावज्जीवेन, निगृह्णतोऽपि विषयान् प्रति पतनात् । अतो बलवता देवेनैव प्रेरितमिति वाच्यम् । स क इति प्रश्नाभिप्रायः । एवमग्रेऽपि । इषितमितीडागमः छान्दसः । मुख्यवायुरस्तु मनःप्रेरक इत्यत आह- **केनेति** ॥ प्रथमः सर्वजीवोत्तमः, प्राणो मुख्यवायुरपि केन युक्तः नियुक्तः प्रेरितस्सन् प्रैति याति, स्वं व्यापारं करोतीत्यर्थः । तस्यापि पारतन्त्र्यात् न मनःप्रेरको वायुरिति भावः । इमां लौकिकीं वैदिकीं वा वाचं केन इषितां प्रेरितां वदन्ति जनाः इत्यर्थः । चक्षुःश्रोत्रमिति प्राण्यङ्गत्वादेकवद्भावः । उ सम्बुद्धिः । भो ब्रह्मन् को देवो युनक्ति नियुङ्क्ते, कः प्रेरयतीत्यर्थः ॥१॥

## उपनिषत्

**श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः । चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥२॥**

## भाष्यम्

**यः प्राणस्य प्रणेता च चक्षुरादेश्च सर्वशः ।**
**अगम्यस्सर्वदेवैश्च परिपूर्णत्वहेतुतः ॥**

**प्राणादीनां प्रणेता च सर्ववेत्ता च सर्वशः ।**
**सर्वोत्तमश्च सर्वत्र स विष्णुरिति धार्यताम् ॥**

**॥ इति प्रथमः खण्डः ॥**

**व्यासतीर्थीयम्–** यः प्राणस्य प्रणेता चक्षुरादेश्च प्रणेता स विष्णुरवधार्यतामिति सम्बन्धः । चक्षुरादिप्रणेतृत्ववेत्तुः फलमाह- **अतिमुच्येति** ॥ अस्माल्लोकात्प्रेत्य गत्वाऽतिमुच्य संसारादमृताभवन्तीति सम्बन्धः । कीदृशं भगवतः प्राणादिप्रेरकत्वमिति जिज्ञासायां तत्र चक्षुराद्यप्रवृत्तेः कीदृशं तदिति न जानीम इत्याह- **न तत्र चक्षुरिति** ॥ तद्व्याचष्टे- **अगम्य इति** ॥ सर्वात्मना चक्षुराद्यगम्यस्तर्हीत्यत

आह- **अन्यदेवेति** ॥ विदिताज्जगतोऽविदिताच्छशविषाणादेरन्यदेव तत् । तत्राधीत्यस्यार्थमाह- **सर्वोत्तमश्च सर्वत्रेति** ॥

**वामनटीका–** 'यः प्राणस्य प्रणेता च' इत्यादिना 'श्रोत्रस्य श्रोत्रम्' इत्यादि परिहारवाक्यं विवृणोति । यः प्राणादीनां प्रणेता स सर्वदेवैरप्यगम्यः, अनन्तगुणत्वात् । एवंलक्षणको लोकविलक्षणः पुरुषः क इत्याकाङ्क्षायामाह– **प्राणादीनामिति** ॥ योऽसौ प्राणादिप्रणेता, अत्यन्तविलक्षणः ,सः सर्वत्र सर्वदेशकालेषु सर्ववेदशास्त्रेषु च विष्णुरिति धार्यताम् निर्धार्यताम् । 'विष्णुरेव हि तच्छ्रुतेः'इति सूत्रात् । तन्निर्धारणफलमाह– **'अतिमुच्य' इति** । एवं सर्वाधिको विष्णुरिति या बुद्धिः सैव धीरित्युच्यते । तत्र रताः धीराः । ते पापकृतीः अतिमुच्य अस्माल्लोकात् प्रेत्य अमृता भवन्ति ॥

**वे.विवरणम्-** इदानीं श्रोत्रस्यश्रोत्रमित्यादिपरिहारवाक्यं व्याचष्टे- **यः प्राणस्येति** ॥ श्रुतौ क्रमाविवक्षयोक्तावपि स्वयं मुख्यत्वक्रममनुसृत्य प्राणस्य प्रणेता चेत्यादावुक्तम् । आदिपदेन श्रोत्रवाङ्मनसां ग्रहणम् । न केवलं एतावत एव नियामकः किन्त्वन्येषां ज्ञानकर्मेन्द्रियाणामपीत्याह- **सर्वशः सर्वस्येति** ॥ अनेन श्रुतौ प्रश्नपरिहारवाक्यगतं मनआदिपदमुपलक्षणपरमिति सूचितम् । यच्छब्दस्य स विष्णुरित्युत्तरेण तच्छब्देनान्वयः । 'न तत्र चक्षुर्गच्छति'इत्यादिवाक्यं चक्षुरादिपदेन जडेन्द्रियमात्रमुच्यत इति प्रतीतिनिरासाय व्याचष्टे- **अगम्यः सर्वदेवैश्चेति** ॥ श्रुत्युक्तमुपलक्षणमितिभावेन वा 'न विद्म न विजानीम' इति ब्रह्माज्ञेयत्वोक्त्या तदवरसर्वदेवाज्ञेयत्वमुक्तप्रायमेवेति भावेन वा सर्वदेवैरित्युक्तम् । 'येन प्राणः प्रणीयत' इति वाक्यं व्याचष्टे- **प्राणादीनामिति** ॥ अत्रापि श्रुत्युक्तमुपलक्षणमितिभावेन वा, रुद्रादिसर्वनियामकप्राणनियामकत्वोक्त्या तन्नियामकत्वमुक्तप्रायमेवेति भावेन वा प्राणादीनामित्यादिपदप्रयोगः । 'येन वागभ्युद्यते' 'येनाहुर्मनो मतं' 'येन चक्षूंषि पश्यन्ति' 'येन श्रोत्रमिदं श्रुतम्'इति वाक्यजातस्य तात्पर्यमाह- **सर्ववेत्ता चेति** ॥ रमादीनामपि सर्ववेत्तृत्वादाह- **सर्वशः सर्वापेक्षयेति** ॥ अविदितादधीत्युक्ताधीत्यस्यार्थमाह- **सर्वोत्तम इति** ॥ देशकालान्तरयोरन्यः सर्वोत्तमः किं नेत्याह- **सर्वत्रेति** ॥

**॥ प्रथमः खण्डः ॥**

**वे.श्रुत्यर्थः-** एवं शिवेन पृष्टश्चतुर्मुखो नारायणं ध्यात्वा परिहारमाह- **श्रोत्रस्येति ॥** यत् श्रोत्रस्य श्रोत्रं श्रोत्रत्वप्रदं त्वया पृष्टं यन्मनसो मनः मनस्त्वप्रदं पृष्टं, यच्च वाचो ह वाचं वात्त्वप्रदं पृष्टं, यश्च प्राणस्य मुख्यप्राणस्य प्राणः प्राणत्वप्रदः पृष्टः, यच्चक्षुषः चक्षुष्ट्वप्रदं पृष्टं, उपलक्षणमेतत् । यच्चान्येन्द्रियनियामकं पृष्टं तत् स उ स एव मम ध्यानविषयीभूतो नारायण एवेत्यर्थः । श्रोत्रादीन्द्रियदेवतानियामको नारायण इति वेत्तुः फलमाह- **अतिमुच्येति ॥** धीरा मनोधैर्यवन्तः श्रोत्रस्य श्रोत्रमित्याद्युक्तप्रकारेण नारायणं प्रेत्य प्रकर्षेण ज्ञात्वा तमपरोक्षीकृत्येति यावत् । अस्माल्लोकात् चरमत्वेन प्रसिद्धाच्छरीरात्प्रेत्य हृदयाग्रप्रज्वलनप्रकाशितद्वारत्वादिलक्षणप्रकर्षेण गत्वा अतिमुच्य प्रारब्धकर्मणेति शेषः । अमृता मुक्ता भवन्तीत्यर्थः ॥ २ ॥

**नृसिंहप्रकाशिका–** एवमुमापतिना पृष्टश्चतुराननो नारायणं ध्यायन् उत्तरमाह- **श्रोत्रस्येति ॥** श्रोत्रस्य श्रोत्रं, मनसो मनः, वाचो ह यद्वाचं वाक्, चक्षुषश्चक्षुः श्रोत्रादिदेवानां श्रवणादिव्यापारजनकशक्तिप्रदत्वेन मुख्यप्राणस्यापि सर्वचेष्टकत्वशक्तिप्रदत्वेन वा त्वया पृष्टः प्रेरकः स उ विचारपूर्वं प्राणादि-सर्वदेवप्रेरकत्वेन मया ध्यातः स विष्णुरेव । एवं वेत्तुः फलमाह- **अतिमुच्येति ॥** अस्मात् लोकात् देहात् प्रेत्य मृत्वेत्यर्थः । संसारादतिमुच्य अमृताः स्वरूपानन्दानुभविनो भवन्ति ॥२॥

**स.भाष्यविवृतिः–** एवमुमापतिना पृष्टश्चतुराननो नारायणं ध्यात्वा उत्तरमवोचत- **श्रोत्रस्य श्रोत्रमिति ॥** यत् श्रोत्रस्य श्रोत्रं श्रोत्रत्वप्रदं त्वया पृष्टं यन्मनसो मनः मनस्त्वप्रदं यच्च वाचो ह वाचं वात्त्वप्रदं वाचमिति द्वितीया प्रथमार्थे सुपां सुपो भवन्तीति वचनात् । यश्च प्राणस्य मुख्यप्राणस्य प्राणः प्राणत्वप्रदः यच्चक्षुषश्चक्षुः चक्षुष्ट्वप्रदम् उपलक्षणमेतत् । यच्चान्येन्द्रियनियामक-त्वमप्राक्षीः तत् सउ स एव मम ध्यानविषयीभूतो नारायण एवेत्यर्थः ।

श्रोत्रादीन्द्रियतद्देवतानियामकः नारायण इति वेदितुः फलमभ्यधात्- **अतिमुच्येति ॥** धीराः धीमन्तः प्राणादिसर्वप्रेरकत्वेन विष्णुज्ञाः अस्माल्लोकात् देहात् प्रेत्य मृत्वा संसारादतिमुच्य अमृताः स्वरूपानन्दानुभविनो भवन्ति ।

तदेतदाख्यासीत् भाष्यकारः । 'यदिदं पुरुषावश्यम्' इत्यारभ्य 'चक्षुरादेश्च सर्वशः'इत्यन्तेन । अत्र च भाष्ये 'चक्षुश्रोत्रं तथावाचम्' इत्यत्र चक्षुश्रोत्रवाक् शब्दानां देवतापरत्वे विनियोजयेदिति स्वार्थिको णिच् । इन्द्रियपरत्वे हेतुमण्णिच्च । खण्डस्थसइत्यनेन परामृष्टव्यार्थं ध्यात्वा 'नारायणं वन्दे' इत्यस्मादारभ्य 'दोषवर्जितम्'इत्यन्तेन अचकथत् ।

अत्र सर्वाधारत्वादिगुणविशिष्टस्य ब्रह्मणो ध्यानम् । एतद्गुणविशिष्टस्यैव तच्छब्देन परामर्शश्च एतेषां गुणानां ध्यातृब्रह्मदृष्टं एतदुपनिषद्वाक्यप्रतिपाद्यत्वात् अवजग्माते । तथा हि श्रोत्रस्य श्रोत्रमित्यादिना तत्र तत्र स्थितस्य तत्तन्नियामकत्वोक्त्या वा यदिदमुपासत इत्यनेन नियामकतया तत्तज्जीवसमीप-स्थत्वोक्त्या वा सर्वाधारत्वं, अन्यदेवतद्विदितादित्यनौपमत्वम्, येन वागभ्युद्यत इत्यादिना सार्वज्ञं, वागादिशब्दानां तद्विषयोपलक्षकत्वात् पूर्वोक्तरीत्या तत्तन्नियामकत्वोक्त्या 'ब्रह्म ह देवेभ्यो विजिग्य' इति सर्वदैत्यदानवजयोक्त्या वा सर्वशक्तित्वम् । 'यत्प्राणेन न प्राणिति'इति पारतन्त्र्याभावोक्त्या तदुपलक्षितसर्वदोषवर्जितत्वं च अवाचिषतेति ज्ञेयम् ।

अनौपमम् । उपमैव औपमम् । स्वार्थिको अण् । न विद्यते औपमं यस्यासौ अनौपमः । तं अनौपमम् । यद्वा उपमाया अयं औपमः सोपम इति यावत् । ततो नञ्समानाधिकरणतत्पुरुषः ।

**वरदतीर्थीयम्-** अथ 'श्रोत्रस्य श्रोत्रम्' इति परिहारवाक्यं व्याचष्टे- **य इति ॥** प्राणस्य मुख्यप्राणस्य सर्वशः चक्षुरादीन्द्रियगणस्य च यः प्रेरकस्त्वया पृष्टः स विष्णुरिति धार्यतां अवधार्यतामित्यर्थः ।

**व.उ.मन्त्रार्थः-** परिहारमाह श्रोत्रस्य श्रोत्रमित्यादिना । यद्वा अस्तु श्रवणशक्तिप्रदानेन श्रोत्रस्य श्रोत्रं मननशक्तिप्रदानेन मनसोऽपिमनस्त्वप्रदं एवं वचनशक्तिप्रदानेन वागिन्द्रियस्यापि वागिन्द्रियत्वप्रदम् । प्राणप्रेरकत्वात् प्राणस्यापि प्राणं, दर्शनशक्तिप्रदत्वात् चक्षुषोऽपि चक्षुः त्वया पृष्टं तद्वस्तु स उ सविष्णुरेवेत्यर्थः ॥२॥

**खण्डार्थः–** इति शिवेन पृष्टो ब्रह्मोवाचेति योज्यम् । यत् यः श्रोत्रस्य श्रोत्रं श्रवणशक्तिप्रदः, मनसो मनः मननशक्तिप्रदः, वाचो वागिन्द्रियस्य वाचं वागुच्चारणशक्तिप्रदः, प्राणस्य मुख्यवायोः प्राणः प्रणेता, चक्षुषः चक्षुः दर्शनशक्तिप्रदः, श्रोत्रादेर्नियन्ता यस्त्वया पृष्टः स इत्यन्वेति । स उ स एव, प्रसिद्धो विष्णुरेवेत्यर्थः । स इत्यस्यावृत्तिर्वा । तदाह भाष्ये 'यः प्राणस्य चक्षुरादेश्च प्रणेता स विष्णुरिति धार्यताम्' इति । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' इत्यादिकाण्वश्रुतेः, 'प्राणादयो वाक्यशेषात्'(ब्र.सू.१-४-१३)इति सूत्रात् तत्र प्राणादिनियन्तुर्विष्णुत्वनिर्णयादिति भावः । श्रोत्रादिप्रेरकज्ञानिनः फलमुच्यते- **अतिमुच्येति** ॥ धीराः धीमन्तः श्रोत्रादिप्रेरकत्वं विजानन्तः अस्माल्लोकात् भौतिकदेहात् प्रेत्य निर्गत्य, मृत्वेति यावत्, अतिमुच्य लिङ्गबन्धं हित्वा अमृता मुक्ता भवन्तीति ॥ २ ॥

## उपनिषत्

**न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः ।**
**न विद्म न विजानीमो यथैतदनुशिष्यात् ॥३॥**

## भाष्यम्

**यं सम्यङ् नैव जानाति कश्चिन्निरवशेषतः ।**

**वामनटीका–** एवं चेद् वेदान् लक्षणं च विनाऽपि प्रत्यक्षादिना तत्स्वरूपनिर्धारणेन मोक्षः स्यादित्यत आह– **न तत्रेत्यादि** ॥ तत्र हरौ अस्मच्चक्षुरादीनि न गच्छन्ति । तस्मात् प्रत्यक्षादिना वयं सर्वेऽपि सर्वथा न तद् विद्म । आगमप्रमाणेनापि तदनुशिष्टप्रकारेण सुसूक्ष्माशेषविशेषैः सह न जानीमः । 'सुसूक्ष्मैरप्यशेषैश्च विशेषैः सह पश्यति । स्वात्मानं भगवान् विष्णुः' (अनु. ३.४.६९) इति श्रुतेः । न हि प्रकृतिस्तावतो विशेषान् तस्मिन् पश्यति । 'नतु सर्वैर्विशेषैस्तम्' (३.४.७१) इति प्रतिषेधात् । 'अत्रोपसृष्टमिति चास्मृत-मिन्दिरायाः' (३.१६.४२) इति भागवते । किं पुनरस्मदादयः? तदेतदाह– यं **सम्यङ् नैव जानाति कश्चिन्निरवशेषत इति** ।

**वे.श्रुत्यर्थः–** अस्त्वेवं श्रोत्रादिनियामको नारायणः स किंलक्षणक इत्यपेक्षायां साकल्येन सर्वदेवाज्ञेयत्वं तावत्तस्य लक्षणमाह- **न तत्रेति ॥** चक्षुः चक्षुरभिमानी देवस्तत्र नारायणविषये न गच्छति न जानातीत्यर्थः । एवमुत्तरत्रापि। उपलक्षणमेतत् । न तत्र श्रोत्रं गच्छतीत्याद्यपि ग्राह्यम् । ननु चक्षुराद्यभिमानि-सूर्याद्यज्ञेयोऽपि भगवान् सर्वदेवोत्तमत्वेन त्वया ज्ञेयः स्यादित्यत आह- **न विद्म इति ॥** सामान्यविशेषज्ञाननिषेधार्थं वा, परोक्षापरोक्षज्ञान-निषेधार्थं वाऽदरार्थं वा द्विरुक्तिः । यद्वा सूर्यादीनां स्वतो नारायणज्ञानासम्भवेऽपि सर्वदेवोत्तम इति त्वदुपदेशेन ज्ञानं स्यादित्यत आह- **न विद्म इति ॥** एतत् नारायणस्वरूपं यथा यथावत् अनुशिष्यादनुशिष्यां युष्मदादिषूपदेशं कुर्यां तथा न विद्म इत्यर्थः । यद्वा त्वमपि किं सर्वात्मना न जानासि इत्यपेक्षायामाह- **यथेति ॥** यथा लोके जन इदं गवयादिकं वस्तु एतद्गवादिसदृशमित्यनुशिष्यात् जानीयात् । तथा परमात्माख्यं वस्तु एतत्सदृशमिति वयं न विद्म इत्यर्थः ।

**नृसिंहप्रकाशिका-** कीदृशं भगवतः प्राणादिप्रेरकत्वमिति जिज्ञासायां तत्र चक्षुराद्यप्रवृत्तेः कीदृशं तदिति न जानीम इत्याह- **न तत्र चक्षुरिति ॥** तत्र भगवद्विषये चक्षुः चक्षुरभिमानिदेवता न गच्छति । न स्वव्यापारवान् भवति । एवं न वाग्गच्छति । नो मनो गच्छति । एतदाद्याः सर्वे वयं यथा एतत् ब्रह्म अनुशिष्यात् उपदेष्टव्यार्थतया परोक्षतः शास्त्रयुक्तिभ्यां न विद्म । अपरोक्षत-श्चक्षुरादिना न जानीमः ॥३॥

**स.भाष्यविवृतिः-** यदि मनआदिप्रेरकं ब्रह्म तर्हि किमिति मन आदिवत् नावभासत इत्यतः चक्षुर्मन आदिस्थितस्य तत्तदभिमानिदेवैरगम्यत्वान्येन्द्रिय-गोचरतेत्यभिदधे- **न तत्र चक्षुर्गच्छतीति ॥** तत्र भगवद्विषये चक्षुरभिमानिदेवः न गच्छति न व्यापारवान् भवति । गच्छतिरत्र प्रवर्तनार्थः । एवं न वाग्गच्छतीत्यादि । उपलक्षणं चैतत् । न श्रोत्रं गच्छति न प्राणो गच्छति इत्यपि ग्राह्यम् । ननु चक्षुराद्यभिमानिसूर्याद्यज्ञेयमपि भगवन्तं सर्वदेवोत्तमत्वेन त्वं जानीयाः इत्यतो अभ्यधत्त- **न विद्म इति ॥** एतत् सर्वत्र सन्निहितं पूर्णं ब्रह्म यथा अनुशिष्यात् इन्द्रियाणि प्रेरयेत् तथा तत्प्रेरकत्वादिधर्मवित् । न विद्म । शास्त्रयुक्तिभ्यां न बुध्यामहे न जानीमः । अपरोक्षतोऽपि न जानीमहे ।

तदभ्यधित । 'अगम्यस्सर्वदेवैश्च परिपूर्णत्वहेतुतः' इति । परिपूर्णत्वत इति हेतुगर्भविशेषणेनैतच्छब्दार्थकथनम् । 'अगम्यस्सर्वदेवैश्च'इत्यनेन चक्षुरादिशब्दानां देवतापरत्वमसुसूचत् । अनुशिष्यादित्यस्य अर्थान्तरकथनम् ।

**वरदतीर्थीयम्-** ननु विष्णोः प्राणादिप्रेरकत्वप्रकारः कथमित्यतोऽस्य चक्षुराद्यगोचरत्वात् प्राणादिप्रेरकत्वप्रकारोऽपीत्थमिति वक्तुं न शक्यत इति भावेन उच्यते- **न तत्र चक्षुर्गच्छतीत्यादि ॥** तस्यार्थोऽगम्य इति । ननु 'न तत्र चक्षुर्गच्छति'इत्यत्र विष्णोर्मनोविषयत्वं नास्तीति यदुक्तं, तन्न । मनोगम्य जीवाभिन्नत्वात् विष्णोः इत्याशङ्कापरिहारपूर्वकं न तत्र चक्षुर्गच्छतीत्युक्तं विव्रियते यद्वाचानभ्युदितमित्यादिना । तस्यार्थः- **प्राणादीनामिति ॥** ननु विष्णोश्चक्षुराद्यगम्यत्वे सर्वात्मनाऽविज्ञेयत्वं स्यात् इत्यत्र उच्यते अन्यदेव तद्विदितादिति । तत्र अधि इत्यस्यार्थमाह- **सर्वोत्तम इति ॥**

**व.उ.मन्त्रार्थः-** न तत्र चक्षुर्गच्छतीत्यस्यायमर्थः । तत्र तस्मिन् परमेश्वरे चक्षुरादिकं न गच्छतीति यतः अतः कारणादेतत् ब्रह्म यथा येन प्रकारेणानुशिष्यात् इन्द्रियादेरनुशासनं कुर्यात् तं प्रकारं सामान्यतो विशेषतः न जानीम इति ॥३॥

**खण्डार्थः-** कीदृशं हरेः प्रेरकत्वादिमाहात्म्यं यज्ज्ञानादमृतत्वं स्यादित्यतोऽपरिमितत्वात्तन्महिम्नो न साकल्येन ज्ञानं सम्भवतीति भावेनाऽह- **न तत्रेति ॥** तत्र हरेर्विश्वशासनादिमाहात्म्ये चक्षुरादीन्द्रियं न गच्छति । अभिमानिनयन्यायेन चक्षुराद्यभिमान्युपलक्षिताः सर्वे देवा अपि न जानन्ति कार्त्स्न्येन । अतो यथा येन प्रकारेण एतत् प्राणदिजगत् अनुशिष्यात् प्रेरयेत् तं प्रकारं वयं न विद्म न विद्मः । विसर्गलोपश्छान्दसः । अडागमाभावेन लङि रूपं वा । सामान्याकारज्ञानमेव नास्ति । कुतो विशेषज्ञानमिति भावेनाह- **न विजानीम इति ॥** तदाह भाष्ये 'अगम्यः सर्वदेवैश्च परिपूर्णत्वहेतुतः' इति ॥३॥

## उपनिषत्

**अन्यदेव तद् विदितादथो अविदितादधि ।**
**इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे ॥ ४ ॥**

**व्यासतीर्थीयम्-** सर्वात्मना चक्षुराद्यगम्यस्तर्हीत्यत आह- **अन्यदेवेति ॥** विदिताज्जगतोऽविदिताच्छशविषाणादेरन्यदेव तत् । तत्राधीत्यस्यार्थमाह- **सर्वोत्तमश्च सर्वत्रेति ॥**

**वामनटीका–** ननु 'न तत्र चक्षुर्गच्छति', वयं 'न विद्म' इत्याद्युक्तेः कर्तृकरणदोषादेवाज्ञेयत्वं तस्य, सर्वतो न वैलक्षण्यादित्यत आह– **अन्यदेवेति ॥** यदिदं प्रत्यक्षादिना विदितं पृथिव्यादि तस्मात् अन्यत् विलक्षणं एव तद् भगवत्स्वरूपम् । आकाशदिवत् स्वत एव सूक्ष्मत्वात् । नच तावता तत्समम् । किन्तु? अविदितात् आकाशादेश्च अधिकमेव । अपि च अथो अत्यन्ताविदितात् अव्यक्ताच्च अत्यन्ताधिकमेव । ततोऽप्यतिसूक्ष्मत्वात् । नच तदाधिक्यमेतावदिति परिच्छेद्यम् । अत एवकारस्तदनवसायं निवर्तयति । नतु समाख्या लुप्यते । महतोऽपि महीयस्त्वोक्तेः । पूर्वेषां नारायणहयग्रीवहंसादीनां सकाशात् तत् तत्त्वं शुश्रुम ।

**वे.श्रुत्यर्थः–** तर्हि कथं जानीथेत्यपेक्षायां कार्यकारणात्मकजगद्विलक्षण-त्वेनैव जानीम इति भावेनाह- **अन्यदेवेति ॥** तत् परं ब्रह्म विदितात् व्यक्तात् कार्यादन्यदेव विलक्षणमेव नतु तत्सदृशम् । न केवलमेतावत् किन्तु अविदितादथो अव्यक्तात्प्रकृत्यादिकारणादपि अन्यदेवेत्यर्थः । ननु कार्यकारणवैलक्षण्योक्त्या कथं माहात्म्यविशेषलाभः । न हि कार्यवैलक्षण्यं कारणे कारणवैलक्षण्यं च कार्येऽस्तीत्येतावता तत्र माहात्म्यविशेषलाभ इति चेन्न । कार्यकारणवैलक्षण्यं हि तद्विरुद्धलक्षणवत्वम् । तच्च सर्वोत्तमत्वमेवेति तल्लाभसम्भव इति भावेनाह- **अधीति ॥** विदितादविदिताच्च सर्वस्मादधि अधिकत्वेन वर्तमानमित्यर्थः । अनेनानुपमत्वं सर्वोत्तमत्वं चेति लक्षणान्तरमुक्तं भवति । इदं न केवलं स्वकल्पितमित्याह- **इतीति ॥** ये व्यासादयो नोऽस्मभ्यं तत् ब्रह्मस्वरूपं व्याचचक्षिरे व्याख्यातवन्तः तेषां पूर्वेषां वचनमिति शुश्रुमेत्यर्थः । पूर्वेषां सकाशादिति वा ॥ ४ ॥

**नृसिंहप्रकाशिका–** तर्हि सर्वथा चक्षुराद्यगम्यः किमित्यत आह- **अन्यदेवेति॥** विदितात् जगतः । अविदितात् शशविषाणात् । अथो अपि तत् ब्रह्म अन्यदेव ।

साकल्येनाज्ञेयम् । तत्र योग्यतानुसारेण ज्ञेयं च । अधि सर्वोत्तमम् । स्वोक्तार्थे स्वगुरुवचनसम्मतिमाह- **इतीति ॥** एतत् ब्रह्म व्याचचक्षिरे । तेषां धीराणां इति वचनं शुश्रुमः ॥४॥

**स.भाष्यविवृतिः–** उत्तमपुरुषैकवचनेनैव न्यवारयदिति न तत्र वयमुद्युंज्महे यदिदं इन्द्रियादिप्रेरकं ब्रह्म मा च ज्ञासीः तर्हि स उ प्राणस्य प्राण इति कथं त्वं मामुपादिशः इत्यतः आचक्षते- **अन्यदेवेति ॥** विदितात् ज्ञातात् वस्तुनः अन्यदेव विलक्षणमेव साकल्येनाज्ञानात् । नातिवेद्यं ब्रह्मेति भावः । अविदितादथो अज्ञातादपि अन्यत् विलक्षणमेव । एकदेशतो ज्ञानान्नचावेद्य इति भावः ।

अत्र विदिताविदितशब्दयोः जगच्छशविषाणपरत्वं कार्यकारणपरत्वं च भाष्योपनिषदोः अधस्थात्परस्तात् अनुपक्रमादनुपपादनाच्च मार्गणीयम् । अधि सर्वोत्तमम् । अधिरीश्वर इति हि पाणिनिरभाणीत् । सर्वोत्तमत्वं चानतिवेद्यत्व-स्योपपादकम् । उपपन्नश्चायमर्थः । पर्वतवरस्य मेरोरदर्शनगोचरत्वमिव दर्शनगोचरस्यापि ।

इदमुक्तं भवति । साकल्येन ब्रह्म मा ज्ञासिष्मेति 'न विद्म न विजानीम यथैतदनुशिष्यात्'इत्यवोचाम । एकदेशेन ब्रह्म अवेदिष्मेतित्युपदिशामेति । स्वाभिहितमर्थं गुरवोऽपि सममंसतेत्यभ्यधात्- **इतीति ॥** ये नः अस्मभ्यं तद् ब्रह्मस्वरूपं व्याचचक्षिरे । व्याख्यासिषुः । तेषां पूर्वेषां वचनं शुश्रुम । अश्रौष्म । नन्वेवमपि विदितविलक्षणत्वं ब्रह्मणो नोपपद्यते । तस्य स्वप्रकाशजीवाभिन्नत्वात् । तथा च न तत्र चक्षुर्गच्छतीत्याद्यप्ययुक्तम् । जीवविषये योगिचक्षुषः तथा वागादेश्च प्रवृत्तिसंभवादित्यतः न तत्र चक्षुर्गच्छतीत्यादि विवृण्वन् ब्रह्मणो जीवाभेदं च निराकृतम् ।

**व.उ.मन्त्रार्थः-** नन्वेवं चक्षुराद्यगम्यत्वे ब्रह्मणः सर्वात्मनाविज्ञेयत्वमेवेति मन्तव्यमित्याह- **अन्यदेवेति ॥** अविदितादधि, अधि अधिकं ब्रह्माख्यं वस्तु विदितात् घटादिवस्तुनोऽन्यदेव विलक्षणमेव सर्वात्मनाज्ञातुमशक्यत्वात् । एवम विदितं सर्वात्मना अविज्ञातं यद्वस्तु गिरिदर्यादिस्थितं तस्मादप्यन्यद्विलक्षणं स्वस्वयोग्यतानुसारेण ज्ञायमानत्वात् । ये महान्तः नः अस्माकं व्याचचक्षिरे ।

व्याख्यातवन्तः तेषां पूर्वेषां महतां सकाशादिति । उक्तप्रकारेण वयं तद्ब्रह्म शुश्रुम इत्यर्थः ॥४॥

**खण्डार्थः–** कुतोऽस्य परिपूर्णत्वमित्यतो लोकविलक्षणवस्तुत्वादिति हेतोरित्याह- **अन्यदेवेति** ॥

तत् चक्षुराद्यगम्यं वस्तु विदितात् प्रमिताज्जगतः, अथोऽविदितादप्रमिता-च्छशशृङ्गादेश्चान्यदेव विलक्षणमेवेत्यर्थः । विदितादन्यदित्युक्तौ निःस्वरूपताशङ्का-व्युदासायाथोऽविदितादन्यदित्युक्तिः । केचित् व्यक्ताव्यक्तजगतोऽन्यदित्यर्थमाहुः । अधि सर्वोत्तम इत्यर्थः । तथा च भाष्यं 'सर्वोत्तमश्च सर्वत्र' इति । इति एवं प्रकारेण पूर्वेषां व्यासप्रभृतीनां सकाशात् शुश्रुम श्रुतवन्तः स्मः । श्रवणस्य चिरकालीनत्वद्योतनाय परोक्षार्थकलिट्प्रयोगः । लिङर्थे लिड्वा । नोऽस्मान् प्रति ये पूर्वे तद् ब्रह्म व्याचचक्षिरे व्याख्यातवन्तः तेषां पूर्वेषामित्यन्वयः ॥४॥

## उपनिषत्

**यद् वाचाऽनभ्युदितं येन वागभ्युद्यते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥**

**यन्मनसा न मनुते येनाऽहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥**

**यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥**

**यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥**

**यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ९ ॥**

॥ इति प्रथमः खण्डः ॥

**व्यासतीर्थीयम्-** न तत्र चक्षुर्गच्छतीत्यादिविवृण्वन्मनोगोचरजीवात्मकत्वात् कथं मनोगोचरत्वमिति शङ्कां च परिहरति- **यद्वाचानभ्युदितमित्यादिना ॥** येन चक्षूंषि पश्यन्ति दृश्यन्ते । ते तव उप आस तदेव ब्रह्म विद्धि । यद्वाचानभ्युदितमित्यादिवाक्यजातं व्याचष्टे- **प्राणादीनामिति ॥** तद्वाक्यजातस्य तात्पर्यमाह- **यं सम्यगिति ॥**

**॥ इति प्रथमः खण्डः ॥**

**वामनटीका–** 'न वाग् गच्छति', 'यद् वाचो ह वाचम्' इत्यादावुक्तलक्षणं 'यद् वाचाऽनभ्युदितम्' इत्यादिनाऽनूद्य 'तदेव ब्रह्म त्वं विद्धि' इत्युपदिशति । यदिदं प्रत्यक्षादिसिद्धं अस्वतन्त्रं जीवस्वरूपं जडं वा केचिदज्ञा ब्रह्मेति उपासते नेदं ब्रह्म विद्धि । अत्यन्तविरुद्धत्वात् । तस्मात् सर्वज्ञत्वसर्वनियामकत्वादि-लक्षणश्रवणात् सत्यज्ञानानन्तं ब्रह्मेति सिद्धम् ।

**॥ इति प्रथमः खण्डः ॥**

**वे.श्रुत्यर्थः-** लक्षणान्तराण्यपि वदल्लक्षणोक्तेः प्रयोजनमाह- **यद्वाचेत्यादिना ॥** यद्वाचा वागिन्द्रियेणानभ्युदितं सम्यगुदितं न भवति । यन्मनसा न मनुते न ज्ञायते पुरुषेण न पश्यति न शृणोति पुरुषः । उपलक्षणमेतत् । अनेनेन्द्रिया-गोचरत्वं लक्षणमुक्तं भवति । यद्वाचानभ्युदितमित्यनेन साकल्येन सर्ववेदाप्रतिपाद्यत्वं चोच्यते । एतेन 'साकल्येन सर्वदेवाज्ञेयत्वमपि इन्द्रियागोचरत्वेनोपपादितं भवति । यथा देवाः परमात्मस्वरूपं सम्यक् न जानन्तीत्यसर्वज्ञास्तथा परमात्मापि किं नेत्याह । 'येन वागभ्युद्यते' इत्यादिवाक्यचतुष्टयेन । वाक् वागिन्द्रियविषयीभूतं शब्दजातं येनानूद्यते । वाक् शब्दो वेदादिसर्ववाक्समूहवाचको वा ॥५॥

मनो मनोविषयीभूतं पदार्थजातं येन मतं मनोविषयीकृतमाहुर्विद्वान्सः ॥६॥ चक्षूंषि चक्षुर्विषयीभूतानि वस्तूनि । येन पश्यन्ति दृश्यन्ते ॥७॥ इदं प्रसिद्धं श्रोत्रं श्रोत्रविषयीभूतं वस्तु येन श्रुतं श्रोत्रेन्द्रियविषयीकृतम् । तदेव ब्रह्म विद्धीत्यर्थः । अनेन सर्वज्ञत्वं लक्षणमुक्तं भवति । एवकारव्यावर्त्यमाह-**नेदमिति ॥** तत् ब्रह्म इदं जीवस्वरूपं न विद्धि तथाज्ञानस्य मिथ्याज्ञानत्वेनानर्थ-हेतुत्वादिति भावः । अनेन जीवभेदज्ञापनमेव लक्षणोक्ति-प्रयोजनमुक्तं भवति । यदि जीवस्वरूपं न ब्रह्म तर्हि किन्तत् इत्यत आह- **यदिदमिति ॥** यदिदं

प्रसिद्धं उप त्वदुपलक्षितजीवस्य समीपे आसते विनियामकतया आस्ते तदेव ब्रह्मेत्यर्थः ॥ ८ ॥

यत् प्राणेन प्रेरितं सत् न प्राणिति न चेष्टते । किन्तु स्वत एवेत्यनेन पारतन्त्र्योपलक्षितसर्वदोषाभावरूपं लक्षणान्तरमुक्तं भवति । येन प्राणो मुख्यप्राणः प्रणीयते सम्यक् नीयत इति सकलनियामकप्राणनियामकत्वोक्त्या सर्वनियामकत्वमेव लक्षणमुक्तं भवति ॥ ९ ॥

**॥ इति प्रथमः खण्डः ॥**

**नृसिंहप्रकाशिका–** 'न तत्र चक्षुर्गच्छति'इत्यादि विवृण्वन् मनोगोचरं जीवाभिन्नस्य कथं मनोजन्यज्ञानाविषयत्वमितिशङ्कां च परिहरति- **यद्वाचेति ॥** यत्स्वरूपं वाचा वागिन्द्रियाभिमानिदेवेन । अनभ्युदितं साकल्येनानुक्तम् । येन वाक् वागभिमानी अभ्युद्यते साकल्येनोच्यते । इदं ते उप समीपे नियामकत्वेन आस । तदेव स्वेतराज्ञेयम् । स्वेतरसर्वज्ञस्वेतरसर्वनियामकमेव ब्रह्म त्वं विद्धि । इदं जीवस्वरूपं ब्रह्म न विद्धि । एवमुत्तरत्रापि योजना द्रष्टव्या । चक्षुषा न पश्यति न दृश्यते । चक्षूंषि पश्यति दृश्यते ॥५-९॥

**॥ इति प्रथमः खण्डः ॥**

**स.भाष्यविवृतिः- यद्वाचेति ॥** यत् यत्स्वरूपं वाचा वागिन्द्रियाभिमानिदेवेन वागिन्द्रियेण च अनभ्युदितं साकल्येनानुक्तं येन वाक् वागिन्द्रियाभिमानिदेवः वागिन्द्रियं च अभ्युद्यते साकल्येनोच्यते यदिदं ते समीपे नियामकत्वेनास तदेव स्वेतराज्ञेयं सर्वज्ञं सर्वनियामकं ब्रह्म त्वं विद्धि । इदं जीवस्वरूपं ब्रह्म न विद्धि । यन्मनसा न मनुते मनसा इन्द्रियेण तदभिमानिदेवतया च न मनुते न मन्यते जनः येनाहुर्मनो मतं येन ब्रह्मणा मनो मतं विचारितमाहुः । शिष्टमुपदिष्टवदेव हि । यच्चक्षुषा न पश्यति जनः येन चक्षूंषि पश्यति दर्शनानुकूलव्यापारवन्ति । करणे कर्तृत्वम् । भगवत्प्रेरितान्येव चक्षूंषि स्वविषयविषयीकरणनिपुणचणानीति भावः । यः श्रोत्रेण न शृणोति जनः येन श्रोत्रमिदं श्रुतं श्रोत्रं तदभिमानिदेवश्च श्रुतं श्रुते श्रवणविषयौ । 'यत्प्राणेन न प्राणिति' यद् ब्रह्म प्राणेन प्रेरितं सत् न प्राणिति न चेष्टते । येन ब्रह्मणा प्राणः मुख्यो वायुः प्रणीयते स्वव्यापारे प्रवर्त्यते ।

अत्र भाष्यकारोदाहृतव्याख्यानरूपस्मृतिभागस्य पूर्वस्मृतिभागवत् व्याख्या-तव्यखण्डवाक्यक्रमेणाप्रवृत्तत्वात् खण्डवाक्यस्य भाष्यकारोदाहृतस्मृतिवाक्यस्य व्याख्येयव्याख्यानभावः प्रदश्यते । तत्र अन्यदेव तद्विताद्थो विदितादित्यंशस्य नातिवेद्यो न चावेद्यः परमेश्वर इति उपपाद्योपपादनमुखेन व्याख्यानम् । अधीत्यंशस्य सर्वोत्तमश्चासर्वत्र स विष्णुरितिधार्यतामित्यंशः अयमिहार्थः । अधीश्वरभावे वर्तते इत्यवोचाम । अधेर्विभक्त्यर्थे वर्तमानस्य अधिकरणार्थकत्वात् । अधि सर्वाधिकरणेषु तदित्यस्य सम्बन्धात् सर्वाधिकरणेषु स विष्णुरेव धार्यतामिति ।

यद्वा 'उपसर्गाः क्रियासन्निधाने तद्विशेषका भवन्ति । असन्निधाने ससाधनां क्रियामाहुः' इति । अत्र अधिशब्द एव अध्यासीनमभिधत्ते । स चावर्तते । अधिकरणविशेषानुक्त्या च सर्वत्रेति लभ्यते । ततश्च सर्वत्र अधिको विष्णुरधिवर्तमान इति । येन वागभ्युद्यते येनाहुर्मनो मतं येन चक्षूंषि पश्यति येन श्रोत्रमिदं श्रुतं येन प्राणः प्रणीयत इत्यंशानां सर्ववेत्ता च सर्वशः इत्यंशः । प्राणं सर्वजगच्चेष्टकं प्रवर्तयमानस्य परमेश्वरस्य सर्ववेदितत्वस्य सुवचत्वात् । वागाद्यभिवन्दनादिना च सार्वज्ञस्य स्पष्टत्वात् । यद्वाचा अनभ्युदितं यन्मनसा न मनुते यच्चक्षुषा न पश्यति यच्छ्रोत्रेण न शृणोति यत्प्राणेन न प्राणितीति पश्चांशानां प्राणादीनां प्रणेता चेत्ययमंशः । उपपन्नश्चायमर्थः ।

न ह्युत्पाद्यउत्पादकस्वरूपं जानीते 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति पश्नस्य 'नेदं जीवस्वरूपमि'त्यारभ्य 'किमु जीवस्य तद्भावो न मन्तव्य इतीर्यत' इत्यन्तोऽशः । अत्र भाष्ये 'आसते विनियामकमि' त्यत्र आस ते विनियामकमिति च्छेदः । न त्वासत इत्येकं पदम् । आस्तेः लुग्विकरणस्थत्वात् । अथ कथमास त इति बोभूयामास किन्तु अस्तेर्भूरित्यार्ध-धातुके भूभावोऽनुशासनात् । आसत इत्येतच्चेयते समीपस्थमित्यर्थनिर्देशाय उपनिषद्गत आस त इति पदद्वयानुवादपरत्वं आसतेर्गत्याद्यर्थस्य लिटि रूपमेतत् । भावनार्थत्वं तु अनेकार्थत्वात् धातूनामुपपद्यते । अत इति रुद्रप्रयुक्त-युष्मच्छब्दोपलक्षितसकलदेवनियामकत्वोक्त्या कैमुत्यसिद्धसकलमर्त्यनियामकत्व-प्रदर्शनपरो नियामकं तद्देवानां मर्त्यानां किमुतोत्तममित्ययमंशः ।

उपासत इति नियामकत्वोक्त्या तत्प्रसादासादितप्रवृत्तिमतो जीवस्य दूरनिरस्ततत्समभावस्य क्व तदभेदं इति कैमुत्यप्रदर्शनपरः । तत्प्रसादं विनेत्यारभ्य इतीर्यते इत्यन्तोंऽशः ।

॥ इति प्रथमः खण्डः ॥

**व.उ.मन्त्रार्थः-** यद्वाचा वागिन्द्रेणानभ्युदितं सर्वात्मना नेत्युदितम् । येन च व्राक् वागिन्द्रियं साकल्येन अशेषविशेषसाहित्येनाभ्युद्यते प्रोच्यते । त्वं तदेव वस्तु ब्रह्म न भवति किन्तु यदिदं वागिन्द्रियाद्यगोचरं वस्तु ते तव उप समीपे प्रेरकत्वेनास्थितं आस तदेव ब्रह्मेत्यर्थः । यन्मनसा न मनुत इत्यादेरप्येवमेवार्थो द्रष्टव्यः । येन चक्षूंषि पश्यति । येन चक्षूंषि दृश्यन्त इत्यर्थः ॥५-९॥

॥ इति प्रथमः खण्डः ॥

**खण्डार्थः-** ननु मनोवाग्गोचरजीवरूपत्वात् ब्रह्मणः वाङ्मनसागोचरत्वोक्तिरयुक्तेत्यतो न तत्र चक्षुर्गच्छतीत्यादेस्तात्पर्योक्तिपूर्वकं पञ्चभिर्मन्त्रैर्भेदमाह- **यद्वाचेति** ॥ यद् ब्रह्म वाचाऽनभ्युदितं साकल्येन नोक्तं, येन प्रेरिता सती वाक् अभ्युद्यते पुरुषैरुच्चार्यते तदेव त्वं ब्रह्म विद्धि जानीहि । नेदं जीवस्वरूपं ब्रह्म । ते तव उप समीपे आस, तिङन्तप्रतिरूपकमव्ययम्, आस्ते नियामकतया वर्तते । इदमेव ब्रह्मेति तदेव विद्धीत्यर्थः । एवमग्रेऽप्यर्थो ध्येयः । पुरुषो न मनुते । मतं विज्ञातम् । चक्षूंषि पश्यति दृश्यन्त इत्यर्थः । न मनुते इत्यादौ, साकल्येनेति ज्ञेयम् । प्राणेन मुख्यवायुना न प्राणिति न चेष्टते । प्रणीयते प्रेर्यते । तदाह भाष्ये-

**प्राणादीनां प्रणेता च सर्ववेत्ता च सर्वशः।**
**यं सम्यङ् नैव जानाति कश्चिन्निरवशेषतः ।**
**नेदं जीवस्वरूपं तद्ब्रह्म विष्ण्वाख्यमव्ययम् ।**
**किन्तु यत्ते समीपस्थमास ते विनियामकम् ।**
**तदेव ब्रह्म विद्धि त्वम्'** ॥ इति ।

तथाऽन्यत् प्रतिषेधात्' इति (ब्र. सू. ३-२-३२) सूत्रभाष्ये तु यदिदं वासनामयमुपासते ध्यायन्ति नेदं वासनामयं ब्रह्म । किन्तु तदेव वाङ्मनोऽगोचरं वासनामयस्थं ब्रह्म विद्धीत्यर्थोऽभिहितः ॥ ५-९ ॥

॥ इति प्रथमखण्डखण्डार्थः ॥

## अथ द्वितीयखण्डः

### उपनिषत्

**यदि मन्यसे सुवेदेति [१]दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् । यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते(मन्ये विदितं)॥१॥**

**व्यासतीर्थीयम्–** ब्रह्म साकल्येन ज्ञातुमशक्यमित्युक्तमुपपादयति- **यदीति** ॥ यदि त्वं ब्रह्म अहं वेदेति मन्यसे तर्हि त्वमपि नूनं दहरमेव ब्रह्मणोऽरूपं वेत्थ ब्रह्मणोऽनन्तत्वादित्यर्थः । यत् यस्माद्दहरमेव वेत्थ । अथ तस्मात् त्वं त्वयि देवेषु चास्य ब्रह्मणो यद्रूपं तत्ते मीमांस्यमेव ।

**वामनटीका–** अथापि 'विद्धि' इत्यभ्याससामर्थ्यात् केनचित् सुविदितं भवितुमर्हति ब्रह्मेति श्रोतुर्मनःशङ्कां स्वयमेवाऽऽशङ्क्य परिहरति– **यदि मन्यस इति** ॥ यदि कश्चित् सुतरां वेद ब्रह्म इति मन्यसे, अहं सुवेदेति वा, तर्हि त्वं दहं स्वहृदयस्थमेव ब्रह्मणो रूपं नूनं न वेत्थ । यदस्य त्वं यदस्य देवेषु, यदस्य ब्रह्मणः त्वंशब्दितं रूपं प्रतियोगित्वात्, त्वद्गतत्वाद् वा, यच्चास्य देवेषु नियामकत्वेन स्थितं रूपं तदुभयमपि न वेत्थ, किंपुनः सर्वगं रूपम् ? एतेष्वेकमपि रूपं न वेत्थ चेत् सुवेद्यं सुवेदेति कथमेव मन्येथाः? अथ तस्मादज्ञस्य तव मीमांस्यमेव ब्रह्मेति अहं मन्ये । अथनुशब्दात् अथवा नैवं त्वं मन्यस इति पक्षान्तरं च सूचितम् । अत्र पुनः 'ते मीमांस्यम्' इति कर्तृविशेषोक्तिः आत्मनो मीमांसितमेवेति च सूचयति ।

**वे.विवरणम्–** 'यदि मन्यसे सुवेदेति' इत्यारभ्य 'नाहमन्ये सुवेद' इत्यन्तवाक्ये रुद्रब्रह्मभ्यामेव साकल्येनाज्ञेयत्वं विष्णोरुक्तं न सर्वैरित्यतस्तत्कैमुत्यसिद्धमिति- भावेन तत्तात्पर्यमाह- **यमिति** ॥ सम्यगित्यस्य विवरणं **निरवशेषत** इति ।

**वे.श्रुत्यर्थः–** ननु यदुक्तं नो मन इति मनोऽभिमानिदेवताज्ञेयं ब्रह्मेति तदयुक्तम् । तदभिमानीन्द्राद्यज्ञेयत्वेऽपि मया सम्यक् ज्ञातुं शक्यत्वादिति

---

१. दहं

रुद्रस्याशङ्कां परिहरति- **यदीति** ॥ हे रुद्र त्वं यदि ब्रह्माहं सुवेदेति मन्यसे तर्हि त्वमपि इतरवत् ब्रह्मणो रूपं स्वरूपं नूनं दहरं अल्पमेव वेत्थ ब्रह्मस्वरूपमात्रज्ञानित्वेऽपि तस्य साकल्येनाज्ञेयत्वाज्ञानात् । तस्यापरिच्छिन्नत्वात् । तव च तत्परिच्छिन्नत्ववेत्तृत्वाद्वेति भावः । यद्यस्मात् त्वं, दहरमल्पमेव वेत्त्थ जानीयाः अथ तस्मात् अस्य ब्रह्मणो यद्रूपं त्वं, प्रथमा सप्तम्यर्थे । त्वयि वर्तते । अस्य ब्रह्मणो यद्रूपं देवेषु वर्तन तत् ते त्वया नु इदानीमपि मीमांस्यमेव ॥१॥

**नृसिंहप्रकाशिका–** ब्रह्म साकल्येन ज्ञातुं न शक्यमित्युक्तमुपपादयति- **यदीति** ॥ यदि त्वं ब्रह्माहं सुवेदोते मन्यसे । तर्हि त्वमपि नूनं निश्चयेन दहरं अल्पमेव ब्रह्मणो रूपं वेत्थ । ब्रह्मणोऽनन्तत्वात् । यत् यस्मात् । दहरं अल्पं वेत्थ । तस्मात् त्वं त्वयि अग्य यद्रूपं वेद वेत्थ यद्देवेष्वपि अस्य यद्रूपं तद्रूपं ते त्वया नु निश्चयेन मीमांस्यमेव । अस्तु त्वदतिरिक्तः सर्वोऽपि जनः ब्रह्म न सम्यक् वेदेति ॥१॥

**स.भाष्यविवृतिः–** इतः परं ब्रह्म ह देवेभ्यो विजिग्ये इत्यतोऽर्वाक्त-नोग्रन्थः अन्यदेव तद्विदितात् अथो अविदितादित्युक्तसाकल्येनाविदितत्वैकदेश-विदितत्वयोः प्रपञ्चयिषया प्रववृते । हे रुद्र अस्य ब्रह्मणः यत् प्रवर्तकं रूपं त्वं वेत्थ तदहं सुवेदेति त्वं यदि मन्यसे तदयुक्तम् । यतो अनन्तमपि ब्रह्मणो त्वं नूनं दहरमेव वेत्थ । जानीषे । यद्यस्मात् दहरमल्पमेव वेत्थ अथ तस्मात् अस्य ब्रह्मणो यद्रूपमध्यात्मं मन आदिदेवेषु अधिदैवं सूर्यादिदेवेषु चास्ति तत्तु ते तव नु इदानीं मीमांस्यमेव त इति कृत्यानां कर्तरि वेति षष्ठी ।

**व.उ.मन्त्रार्थः-** ब्रह्मसाकल्येन ज्ञातुमशक्यमित्युक्तमुपपादयति- **यदीति** ॥ भो महेश्वर यदि त्वं अहं ब्रह्म सुवेद सम्यग्वेदेति मन्यसे तर्हि त्वं नूनं निश्चितं ब्रह्मणोरूपं ब्रह्मस्वरूपं दहरमेव अल्पमेव वेत्थ न साकल्येन जानासीत्यर्थः । अथ तस्मात् कारणात् अस्य ब्रह्मणः यद्रूपं त्वयि स्थितं यच्चरूपं देवेषु स्थितं तद्रूपं ते मीमांस्यमेव विचार्यमेव ॥१॥

**खण्डार्थः–** ब्रह्म साकल्येन न ज्ञेयमित्युक्तमर्थं व्यनक्ति- **यदि मन्यस इत्यादिना** ॥

हे महेश्वर, अहं सुवेद ब्रह्म सम्यग्जानामीति यदि मन्यसे तर्हि त्वमपि नूनं दहरमेव अल्पमेव ब्रह्मणो रूपं वेत्थ,तस्यानन्तत्वादिति भावः । यत् यस्मात् दहरमेव वेत्थ अथ तस्मात् त्वं त्वयि,व्यत्ययात्, देवेषु वाऽस्य ब्रह्मणो यद्रूपं, तदिति शेषः, मीमांस्यमेव विचार्यमेव, नु इदानीं ते त्वयेति ॥ १ ॥

## उपनिषत्

**नाहमन्ये सुवेदेति नो न वेदेति वेद च ।**
**यो नस्तद् वेद तद् वेद नो न वेदेति वेद च ॥२॥**

**व्यासतीर्थीयम्–** अस्तु त्वदतिरिक्तः सर्वोऽपि जनः ब्रह्म न सम्यग्वेदेति त्वं तु सम्यग्वेत्थेत्यत आह- **मन्यइति ॥** मामन्ये अयं ब्रह्मा सु सम्यग्वेदेति वदन्ति अहं तु ब्रह्म विदितं न मन्य इति योजना । तर्हि त्वमपि ब्रह्म न वेत्थ किमित्यत आह- **नो न वेदेति ॥** न वेदेति नो किन्तु वेद चेति ।

ब्रह्मणः साकल्येनाज्ञेयत्वमुपपाद्य उपसंहरति- **योन इत्यादिना ॥** नोऽस्माकं मध्ये यस्तु ब्रह्म अहं वेदेति वदति स तन्नो वेद । तत्कुतः । परिच्छिन्नत्ववेदनात् । अहं न वेदेति यो वदति असौ वेद च कुतः ब्रह्मणोऽपरिच्छिन्नत्वज्ञानात् । यस्य ब्रह्माविदितमिति मतं तस्य ब्रह्म विदितम् । उक्तहेतोः । यस्य ब्रह्म मतमिति मतं स न वेद । 'वयं ब्रह्म सम्यगपरोक्षतो विद्म इति विजानतामविज्ञातम् । उक्तहेतोः । उक्तवैपरीत्येन विजानतां विज्ञातं उक्तहेतोः ।

**वामनटीका–** पक्षान्तरे तु ज्ञानानुदयदोषस्य सर्वसम्मतत्वात् मीमांसापक्ष-मेवाऽश्रित्याऽह– **विदितमित्यादि ॥** अयमर्थः– मीमांसयाऽपि सर्वजन्तुभिः विदितं भवतीति न मन्ये । 'असार्वत्रिकी'(ब्र.सू.३.४.१०)इति सर्वाधिकारस्य निषेधात् । तर्हि अविदितं केनापीति च न मन्ये । तद्भक्तैर्यथाधिकारं विदितत्वात् । भक्ताग्रर्णरिकस्तु तदनुग्रहात् सुवेद । ग च वायुरहं च । छन्दसां योगार्थवित्त्वात् । इतिशब्दादितोऽधिकोऽधिकारी नास्तीति सूचयति । समाप्ति-वाचकत्वात् । 'नाहमन्ये' इत्युभयत्राप्यहशब्दस्तु एवमहो महदाश्चर्यं ब्रह्मेति

वक्ति । एवं स्वमतमुपन्यस्तम् । अथ परमतं दूषयति– **नो इति ॥** यदिदं सच्चित्सुखाद्वयं ब्रह्म तत् सर्वथा कश्चित् न वेद, वेत्तुरेवासम्भवात्, नहि स्वयमेव स्वात्मानं वेद, कर्मणः कर्तृत्वासम्भवात्, नच परो वेद, परस्य स्वरूपासिद्धेः, नच तस्य वेद्यत्वमस्ति, अविषयत्वात्, मिथ्यात्वप्रसक्तेश्च, तस्मात् कोऽपि ब्रह्म न वेदेति यदिदमासुरमतं तदप्यहं ग्राह्यमिति नो वेद । चशब्दोऽवधारणे । न मम मतमन्यथा भवति । 'व्याचचक्षिरे', 'शुश्रुम' इति श्रोतृत्वनिश्चयात् । 'न कर्हिचिन्मे मनसो मृषागतिः' (२.६.३३) इति भागवतवचनाच्च । यत् पुनरिह परोत्प्रेक्षितं युक्तिजातं तदनुभवादिविरुद्धत्वादमानम् । अहं मामिति स्वग्रहणात्, तद् ब्रह्मेति विषयीकरणात्, स्वतोऽभेदाभावात्, बाधकाभावाच्च । तस्माद् यथायोग्यं वेद्यमेव ब्रह्मेत्येष्टव्यम् । तदेतदाह– **'नातिवेद्यो नचावेद्यः'** इति । इहातिवेद्यत्वोत्प्रेक्षणमवेद्यत्वोत्प्रेक्षणं चाब्रह्मविल्लक्षणं ह्युक्तम् । अथ ब्रह्मविदः किं लक्षणमित्याकाङ्क्षायामाह– **यो न इति ॥** यो मीमांसकानामस्माकं तद् यथाधिकारवेद्यत्वं ब्रह्मणो वेद स एव तद् ब्रह्म वेद । यः पुनः कोऽपि न वेदेति दुर्मतं सुमतमिति च नो वेद । वेद्यत्वमात्रस्य च दृश्यमानत्वात् । एवं च सुवेद्यत्वावेद्यत्वाभावज्ञानं ब्रह्मविल्लक्षणमिति सिद्ध्यति । तस्मादेव ब्रह्मरूपं दहरमेव वेद्यं नादहरमित्युक्तं स्यात् ।

**वे.श्रुत्यर्थः–** तर्ह्यस्तु त्वदतिरिक्तः सर्वोऽपि जनः ब्रह्म न सम्यग्वेदेति । त्वं तु ब्रह्म सम्यग्वेत्थ तथा व्यवहारात् । तथा च न देवाज्ञेयं ब्रह्मेत्यत आह- **मन्य इति ॥** अहं मया ब्रह्म विदितं न मन्य इति सम्बन्धः । तर्हि कथं व्यवहार इत्यत अज्ञानमूलकोऽयं व्यवहार इति भावेनाह- **अहमन्ये सुवेदेतीति ॥** अन्ये अज्ञानिन एव जनाः अहं ब्रह्म सुवेदेति वदन्तीत्यर्थः । तर्हि त्वया ब्रह्म किं सर्वात्मनाऽविदितं नेत्याह- **नो इति ॥** सर्वात्मना ब्रह्म न वेदेति नो किन्तु अल्पं वेद च । ननु यदि त्वं ब्रह्म सम्यक् न वेत्थ तर्हि अज्ञानी, स्या इत्यतो न ममाज्ञानित्वं, किन्तु ज्ञानित्वमेव । मया ब्रह्म सम्यक् विदितमिति जानत एवाज्ञानित्वात् । मया ब्रह्म सम्यङ् न विदितमिति जानतस्तु ज्ञानित्वादिति भावेन साकल्येनाज्ञेयत्वं किंचिद् ज्ञेयत्वं चोपपादयति- **य इति ॥** नः अस्माकं

मध्ये यः पुरुषः अहं तद् ब्रह्म सम्यग् वेदेति वेद स तद् ब्रह्म नो वेद न जानाति । तस्य परिच्छिन्नत्वात् । यश्चाहं तद्ब्रह्म सम्यङ् न वेदेति वेद, स ब्रह्मस्वरूपं वेद । तस्यापरिच्छिन्नत्वज्ञानात् ।

**नृसिंहप्रकाशिका–** त्वं तु सम्यग्वेत्थेत्यत आह- **मन्य इति** ॥ मां अन्ये । अयं चतुर्मुखः परं ब्रह्म सम्यग्वेदेति वदन्ति । अहं तु परं ब्रह्म मया साकल्येन विदितं न मन्ये । अनन्तत्वात् । तर्हि ब्रह्म त्वं न वेत्थ किमित्यत आह- **नो नेति** ॥ न वेदेति नो । किन्तु अहं ब्रह्म मद्योग्यतानुसारेण वेद च । ब्रह्मणस्तत्तद्योग्यतानुसारेण ज्ञेयत्वात् । ब्रह्मणः साकल्येन अज्ञेयत्वमुपपाद्य उपसंहरति- **यो न इति** ॥ नः अस्माकं मध्ये यस्तु तत् ब्रह्म साकल्येन वेदेति वदति सः तद् ब्रह्म न वेद । कुतः साकल्येनाज्ञेयत्वावेदनात् । यः तं न वेदेति वदति असौ तद्वेद च । कुतः साकल्येनाज्ञेयत्ववेदनात् । यस्य ब्रह्म मतमित्यङ्गीकारः ॥२॥

**स.भाष्यविवृतिः-** तर्हि त्वं अस्मान् ब्रह्मोपादिश इति ब्रह्मवेदी स्याः इत्यतः नाहं ब्रह्म सुवेद्मीत्याह- **मन्ये विदितमिति** ॥ अहं मया ब्रह्म विदितं न मन्ये । तर्हि कथं लोकाः व्यवाहरन् इत्यतोऽजानाना एव व्यावहार्षुरित्याशयेनाभिदधौ- **अन्ये सुवेदेति** ॥ अन्ये अजानानाः जनाः अहं ब्रह्म सुवेदेति मन्यन्ते । तर्हि त्वं ब्रह्म सर्वथा किं मा स्म जानाः इत्यतः लेशतो जाने श्रीजानिं कार्त्स्न्येन तु न जाने इत्याचख्यौ- **नो न वेदेति** ॥ सर्वात्मना ब्रह्म न वेदेति नो किन्त्वल्पं वेद च । साकल्येनाज्ञेयत्वमुपपाद्य उपसंहरति- **यो न इति** ॥ यः नो अस्माकम् । निर्धारणे षष्ठी । अहं तद् ब्रह्म सम्यग्वेदेति वेद स तद् ब्रह्म नो न जानाति तस्य परिच्छिन्नत्ववेदित्वात् । यश्च अहं तद्ब्रह्म सम्यङ् न वेद इति वेद स ब्रह्मणः रूपं वेद जानीते । तस्यापरिच्छिन्नत्ववेदित्वात् ।

**व.उ.मन्त्रार्थः-** त्वत्तोऽधिकस्य ममापि साकल्येन ब्रह्मज्ञानं नास्तीत्युच्यते । **मन्ये विदितमिति** । यद्यपि अन्ये जनाः अयं ब्रह्मा सुवेदेति वदन्ति तथापि अहं ब्रह्मविदितं साकल्येन मया ज्ञातमिति न मन्ये इत्यर्थः । एवं सति सर्वात्मना ज्ञानं नास्तीत्यपि न मन्तव्यमित्याह- **नो इति** ॥ अहं सर्वात्मना

ब्रह्म न वेदेति च नोक्तः किन्तु वेद च । किञ्चिज्जानामीतिच । एवमन्योऽपि यो जनः अस्माकं मध्ये ब्रह्मा अहं वेदेति मन्यते सोऽपि पुरुष तद् ब्रह्म नो वेद त जानाति । अथ यः पुरुषः ब्रह्मा अहं न वेदेति मन्यते स तद् ब्रह्म जानाति अहं ब्रह्म साकल्येन न जानामीत्यस्य यथार्थज्ञानत्वादित्यर्थः ॥२॥

**खण्डार्थः–** न भवत्वन्येषां कात्स्र्येन ब्रह्मज्ञानित्वं, तव तु अस्ति सम्यग्ज्ञानित्वमिति पृष्टो ब्रह्मा वक्ति- **'मन्य इति ॥**

अन्ये सम्यग्वेद ब्रह्माऽयमिति मां प्रवदन्ति । अहं तु ब्रह्म विदितं न मन्य इति योजना । तर्हि त्वमपि सर्वथा न वेत्थ किमित्यत आह- **नो नेति ॥** न वेदेति नो न जानामीति न, किन्तु वेद चेति । ब्रह्मणः साकल्येनाज्ञेयत्वमुपपाद्योपसंहरति- **यो न इत्यादिना ॥** नोऽस्माकं मध्ये यस्तु ब्रह्माहं वेदेति वदति स तन्नो वेद । कुतः? परिच्छिन्नत्ववेदनात् । अहं न वेदेति यो वेद असौ वेद च । कुतः? ब्रह्मणोऽपरिच्छिन्नत्वज्ञानात् ॥२॥

## उपनिषत्

**यस्यामतं तस्य मतं मतं यस्य न वेद सः ॥**
**अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ३ ॥**

## भाष्यम्

यं सम्यङ् नैव जानाति कश्चिन्निरवशेषतः ।
सर्वात्मना [1]विजानामीति तु यस्य मतं भवेत् ॥

तस्याज्ञातस्स भगवान् यो नैवं मन्यते सदा ।
ज्ञातस्तस्य तथाऽस्यैव निश्शेषमननं कृतम् ॥

इति यो मन्यते नास्य मतस्स पुरुषोत्तमः ।
नातिवेद्यो न चावेद्यस्तस्मात्स परमेश्वरः ॥

---

१. विजानामीति यस्य

**व्यासतीर्थीयम्–** अत्र श्रवणमननापरोक्षज्ञानानां साकल्यागोचरत्वमुच्यते ब्रह्मणः । अप्रतीतेर्यो नस्तद्विदेत्यादि व्याचष्टे- **सर्वात्मनेत्यादिना** ॥ योनस्तद्वेदेत्यादेस्तात्पर्यमाह- **नातिवेद्यइति** ॥

**वामनटीका–** अथ दह्रमपि गुणक्रियाद्यशेषविशेषैः सह नैव ज्ञातं भवतीत्याह– **अविज्ञातमिति** ॥ अशेषविशेषैः सह जानीम इति वदतामविज्ञातमेव ब्रह्म अन्येषां विज्ञातं भवति । अपरिच्छिन्नमेतदिति सम्यज्ज्ञातत्वात् । अत्र प्रमाणमाह– **सर्वात्मनेति** ॥ अस्यैव निःशेषमननं कृतमित्यादिना 'यस्यामतं तस्य मतम्' इत्यादेरभिप्रायं कथयति । क्रमविपर्यासस्तु व्युत्पादनसौकर्यापेक्षया युज्यते । 'नूनं न वेत्थ' इति ब्रह्मवाय्वोरेव ह्यज्ञत्वापवादः । 'सुवेद' इति देवाद्यनन्तरूपब्रह्मज्ञानविधानात् । 'ब्रह्मा तु सर्वगं पश्येत्' (अनु.३.४.७२) इति वचनाच्च । 'न विद्म न विजानीमः' इति वचनं तु, 'न रमावद् विशेषाणां दर्शनं शक्नुयात् क्वचित्' (अनु.३.४.७३) इत्युक्तत्वात् तादृशानन्तविशेष-विवक्षयेत्यविरोधः । एतदेव हि भाष्ये पुरस्तादुक्तम्– 'यं सम्यङ् नैव जानाति कश्चिन्निरवशेषतः' इति । अत्र तु भगवद्व्यतिरिक्तानां यथायोग्यपरिज्ञानाभ्यनुज्ञानं हि कृतम् । इदमेव पुनः– नातिवेद्यो नचावेद्य इति निगमयाञ्चकार । अनन्तत्वात् नातिवेद्यः । शास्त्रयोनित्वात् नचावेद्यः । किन्तु यथाशक्ति वेद्य एव ।

**प्रकाशिका–** ''सर्वात्मना विजानामि''इत्यत्र सर्वान् विजानामि विशेषतो जानामि अपरोक्षतो जानामीत्यर्थः । तस्य स भगवानज्ञातः सम्यगपरोक्षतो न ज्ञात इत्यर्थः । असङ्ख्यातगुणस्य ब्रह्मणस्सामस्त्येन ज्ञानायोगादिति भावः । य एवं सर्वात्मना विजानामीति न मन्यते तेन स भगवान् परोक्षतो ज्ञात एव । सामस्त्येनाज्ञातस्य हरेर्यथायोग्यं ज्ञातस्यैवानुमतत्वात् । यथाऽपरोक्षज्ञाने पूर्ववदेव योजना । तस्मात्पूर्वोक्तन्यायान्नातिवेद्यः । अतिशयेन वेद्योऽतिवेद्यः सामस्त्येन वेद्यो नेत्यर्थः । अवेद्यः सर्वथा शशविषाणवदवेद्यश्च अवेद्योऽपि न, किन्तु स्वस्वयोग्यतानुसारेण वेद्य इति भावः ।

'न विद्म न विजानीम' (ख०१) इत्युपनिषद्वाक्यस्य एतद् ब्रह्म यथाऽनुशिष्याज्जगन्नियमयेत् एतत् आन्तं विद्म विदामेत्याशां च न कुर्मः ।

आशिषि लोटोऽनुशासनात् । अत एव न विजानीमः तादृशं ज्ञानं वर्तमानमप्यस्माकं नास्तीत्यर्थः । वर्तमाने हि लट् । अतो न पौनरुक्त्यम् ।

**वे.विवरणम्–** यो नस्तद्वेद तद्वेद नो इति वाक्यमल्पमात्रभगवत्स्वरूप-ज्ञानिनोऽपि अज्ञानित्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे- **सर्वात्मनेति ॥** तस्य तेन अज्ञातः तस्य भगवत्परिच्छिन्नत्वज्ञानित्वादितिभावः । न वेदेति वेद च इति वाक्यमज्ञानिनो ज्ञानित्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे- **यो नैवमिति ॥** एवं सर्वात्मना विजानामीति । तस्य भगवदपरिच्छिन्नत्व-ज्ञानित्वादितिभावः ।

यद्वाऽविज्ञातं विजानतां विज्ञातमविजानतामि'ति वाक्यं व्याचष्टे- **सर्वात्मनेत्यादिना ॥** 'मतं यस्य न वेद स' इत्येतत्पूर्वोक्तशङ्कापरिहाराय व्याचष्टे- **तथास्यैवेति ॥** अस्तु सर्वात्मना विजानामीत्यादिज्ञान्यज्ञानी । एवं न जानामीत्यादिज्ञानी तु ज्ञानी ततः किमित्यत आह- **नेति ॥** यस्मात्तथा ज्ञान्यज्ञानी तस्मात्परमेश्वरो नातिवेद्यः साकल्येन ज्ञातुमशक्य इति सिद्धम् । यस्मात्तथा ज्ञानी सम्यक् ज्ञानी तस्मात्सर्वात्मनाऽवेद्योऽपि न किन्तु किञ्चिद्वेद्यश्चेति सिद्धमित्यर्थः ।

**वे.श्रुत्यर्थः–** यस्य येन मया ब्रह्म अमतं सम्यङ् मननविषयीकृतम् न भवतीति मतं मननविषयीकृतम् । तस्य तेन ब्रह्म मतं मननविषयीकृतम् । ब्रह्मापरिच्छिन्नत्वमननात् । यस्य येन मया ब्रह्म सम्यक् मतमिति मतं ज्ञातं स न वेद । तस्य परिच्छिन्नत्वज्ञानात् ॥३॥

**नृसिंहप्रकाशिका–** तस्य ब्रह्म मतं उक्तहेतोः यस्य ब्रह्म मतमित्यङ्गीकारः सः न वेद न मनुते उक्त हेतोः । विजानतां ब्रह्म साकल्येनापरोक्षज्ञानविषयः इत्यङ्गीकारवताम् । तत् अविज्ञातम् । उक्तहेतोः । अविजानतां उक्तविपरीतानां विज्ञातम् उक्तहेतोः । अनेन श्रवणमननापरोक्षज्ञानानां साकल्येनाविषयत्वं योग्यतानुसारविषयत्वं ब्रह्मलक्षणमुक्तं भवति ॥३॥

**स.भाष्यविवृतिः–** यस्य ब्रह्म अमतं मननाविषयः इति मतं अङ्गीकारः तस्य ब्रह्म मतम् । अपरिच्छेतृत्वात् । यस्य ब्रह्म मतं साकल्येन मननविषयः इति

मतं अभ्युपगमः स न वेद न मन्यते । परिच्छेदकत्वात् । विजानतां साकल्येन ब्रह्म ध्यायाम इति जानतां साकल्येन ब्रह्म अपरोक्ष्यकार्ष्मेति बुध्यमानानां वा । अविज्ञातं अज्ञातं अनपरोक्षीकृतमिति वा । पूर्वोक्तादेव हेतोः विज्ञातमविजानतां साकल्येन ब्रह्म नाध्याषिष्ये इति ध्यायताम् । साकल्येन ब्रह्म नापरोक्ष्याकार्ष्मेति अपरोक्षीकुर्वाणानां वाविज्ञातं ध्यानविषयो परोक्षज्ञानविषयो वा । प्रागुक्तयुक्तेरेव ।

**वरदतीर्थीयम्-** 'यद्वाचानभ्युदितं' इत्यादेस्तात्पर्यमाह- **यं सम्यगिति** ॥ ब्रह्मणः साकल्येन ज्ञेयत्वं नास्तीत्युपपाद्यते 'यदिमन्यसे सुवेदे'त्यादिना । तस्य तात्पर्यार्थः- **सर्वात्मनेति** ॥ 'यस्यामतं तस्यामतं' इत्यस्यार्थः तथा अस्यैव निःशेषमननम्'इति । मथितार्थमाह- **नातिवेद्य इति** ॥

**व.उ.मन्त्रार्थः-** एवं साकल्येन मननविषयत्वमपि विष्णोर्नास्तीत्युच्यते **यस्यामतमिति** ॥ एवमेव ध्यानविषयत्वं च साकल्येन नास्तीत्युच्यते **अविज्ञातमिति** ॥

**खण्डार्थः–** यो न इत्यादिना साकल्येन श्रवणागोचरत्वमुक्त्वा मननगोचरत्वं चाह- **यस्येति** ॥ यस्य ब्रह्मामतम् । अविचारितमिति मतं बुद्धिः तस्य पुंसो ब्रह्म मतं विचारितं अनन्तत्वज्ञानात् । यस्य ब्रह्म मतं विचारितमिति मतं बुद्धिः स न वेद अनन्तत्वाज्ञानात् । साक्षात्कारोऽपि साकल्येन नेत्याह- **अविज्ञातमिति** ॥

वयं ब्रह्म साक्षात्कृतवन्त इति विजानतां अविज्ञातम्, ब्रह्मानन्त्याविज्ञानात् । अविजानतां उक्तरीत्या ज्ञानहीनानां, नास्माभिः ब्रह्म सम्यक् साक्षात्कृतमित्यर्थः अनन्तत्ववेदनादित्यर्थः । तदाह भाष्ये-

**सर्वात्मना विजानामीति तु यस्य मतं भवेत् ।**
**यस्याज्ञातस्स भगवान् यो नैवं मन्यते सदा ॥**
**ज्ञातस्तस्य तथाऽस्यैव निश्शेषं मननं कृतम् ।**
**इति यो मन्यते नास्य मतस्य पुरुषोत्तमः ॥**
**नातिवेद्यो न चावेद्यस्तस्मात् स पुरुषोत्तमः ॥ इति ॥३॥**

उपनिषत्

**प्रतिबोधविदितं मतममृतत्वं हि विन्दते ।**
**आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥ ४ ॥**

**व्यासतीर्थीयम्–** नेदं यदिदमित्येतदन्तरितमप्रतीतेर्व्याचष्टे- **नेदमित्यादिना ॥** जीवब्रह्मणोरभेदाभावे स्वयं मूलाभिमतां नियामकत्वादिलक्षणां उपपत्तिमाह- **नियामकं तदित्यादिना ॥** अस्तु ब्रह्म साकल्येनागोचरइति । इतरेषां कथं तेनाभीष्टसिद्धिरित्यतआह- **प्रतिबोधेति ॥** ब्रह्मश्रुतं मतं प्रतिबोधविदितं चेदमृतत्वं हि विन्दत इत्यर्थः ।

ज्ञानेनामृतत्वं विन्दत इत्युक्तम् । तत्र किं ज्ञानेन सर्वाभीष्टसिद्धिरित्यतो ज्ञानोत्तरकर्मणा चेत्याह- **आत्मनेति ॥** आत्मना ज्ञानोत्तरकालीनयज्ञादि-प्रयत्नेन वीर्यमानन्दातिशयं विन्दते । विद्ययाऽमृतं अविद्यानिवृत्तिमिति ।

**वामनटीका–** उपदेशमुपसंहरति– **प्रतिबोध विदितं मतमिति ॥** एतत् मतं एवं मया भगवत्याः श्रुतितः श्रुत्वा युक्तितो मत्वा विचार्य निर्णयेन विदितम् । त्वमपि मदुपदेशेन इत्थमेव प्रतिबोध । अस्य प्रतिबोधस्य फलमप्युपदिशति– अमृतत्वं हि विन्दते । अतस्त्वमपि तद्बोद्धा चेत् तद् विन्दस इति भावः । ज्ञानमन्तरेणापि स्वशक्त्या महोत्साहेनामृतत्वं विन्दत इत्यत आह– **आत्मनेति ॥** आत्मशक्त्या उत्साहपरिपूर्तिमेव विन्दते । विद्ययैव अमृतत्वं विन्दते पुरुषः ।

**वे.श्रुत्यर्थः–** विजानतां मया ब्रह्म सम्यग् ध्यानविषयीकृतमिति ध्यायतां ध्यायद्भिरविज्ञातम् । अविजानतां मया ब्रह्म विशेषेण ध्यातं न भवतीति जानतां ध्यायतां ध्यायद्भिर्विज्ञातं विशेषेण ध्यातम् । अस्तु साकल्येनाज्ञेयं ब्रह्मेतरेषां किं तत इत्यत आह- **प्रतिबोधेति ॥** येन ब्रह्मोक्तप्रकारेण प्रतिबोधविदितं अपरोक्षज्ञानविषयीकृतं स अमृतत्वं विन्दत इत्यर्थः । यदि ब्रह्म प्रतिबोधविदितं तर्हि अमृतत्वं विन्दते वेदयति प्रापयतीति वाऽर्थः । प्रतिबोधः कथं स्यादित्यत आह- **मतमिति ॥** उपलक्षणमेतत् । ननु 'अपाम सोमममृता अभूम' इत्यादिश्रुतौ कर्मणोऽमृतत्वसाधनत्वेनोक्तत्वात् कथं ज्ञानस्य मोक्षसाधनत्वमिति चेन्न । प्रवृत्तकर्मणो मोक्षसाधनत्वायोगेन निवृत्तकर्मण एव

मतं अभ्युपगमः स न वेद न मन्यते । परिच्छेदकत्वात् । विजानतां साकल्येन ब्रह्म ध्यायाम इति जानतां साकल्येन ब्रह्म अपरोक्ष्यकार्ष्मेति बुध्यमानानां वा । अविज्ञातं अज्ञातं अनपरोक्षीकृतमिति वा । पूर्वोक्तादेव हेतोः विज्ञातमविजानतां साकल्येन ब्रह्म नाध्याषिष्ये इति ध्यायताम् । साकल्येन ब्रह्म नापरोक्ष्याकार्ष्मेति अपरोक्षीकुर्वाणानां वाविज्ञातं ध्यानविषयो परोक्षज्ञानविषयो वा । प्रागुक्तयुक्तेरेव ।

**वरदतीर्थीयम्**- 'यद्वाचानभ्युदितं' इत्यादेस्तात्पर्यमाह- **यं सम्यगिति** ॥ ब्रह्मणः साकल्येन ज्ञेयत्वं नास्तीत्युपपाद्यते 'यदिमन्यसे सुवेदे'त्यादिना । तस्य तात्पर्यार्थः- **सर्वात्मनेति** ॥ 'यस्यामतं तस्यामतं' इत्यस्यार्थः तथा अस्यैव निःशेषमननम्'इति । मथितार्थमाह- **नातिवेद्य इति** ॥

**व.उ.मन्त्रार्थः**- एवं साकल्येन मननविषयत्वमपि विष्णोर्नास्तीत्युच्यते **यस्यामतमिति** ॥ एवमेव ध्यानविषयत्वं च साकल्येन नास्तीत्युच्यते **अविज्ञातमिति** ॥

**खण्डार्थः**– यो न इत्यादिना साकल्येन श्रवणागोचरत्वमुक्त्वा मननगोचरत्वं चाह- **यस्येति** ॥ यस्य ब्रह्मामतम् । अविचारितमिति मतं बुद्धिः तस्य पुंसो ब्रह्म मतं विचारितं अनन्तत्वज्ञानात् । यस्य ब्रह्म मतं विचारितमिति मतं बुद्धिः स न वेद अनन्तत्वाज्ञानात् । साक्षात्कारोऽपि साकल्येन नेत्याह- **अविज्ञातमिति** ॥

वयं ब्रह्म साक्षात्कृतवन्त इति विजानतां अविज्ञातम्, ब्रह्मानन्त्याविज्ञानात् । अविजानतां उक्तरीत्या ज्ञानहीनानां, नास्माभिः ब्रह्म सम्यक् साक्षात्कृतमित्यर्थः अनन्तत्ववेदनादित्यर्थः । तदाह भाष्ये-

**सर्वात्मना विजानामीति तु यस्य मतं भवेत् ।**
**यस्याज्ञातस्स भगवान् यो नैवं मन्यते सदा ॥**
**ज्ञातस्तस्य तथाऽस्यैव निश्शेषं मननं कृतम् ।**
**इति यो मन्यते नास्य मतस्य पुरुषोत्तमः ॥**
**नातिवेद्यो न चावेद्यस्तस्मात् स पुरुषोत्तमः ॥ इति ॥३॥**

## उपनिषत्

**प्रतिबोधविदितं मतममृतत्वं हि विन्दते ।**
**आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥ ४ ॥**

**व्यासतीर्थीयम्–** नेदं यदिदमित्येतदन्तरितमप्रतीतेर्व्याचष्टे- **नेदमित्यादिना ॥** जीवब्रह्मणोरभेदाभावे स्वयं मूलाभिमतां नियामकत्वादिलक्षणां उपपत्तिमाह- **नियामकं तदित्यादिना ॥** अस्तु ब्रह्म साकल्येनागोचरइति । इतरेषां कथं तेनाभीष्टसिद्धिरित्यतआह- **प्रतिबोधेति ॥** ब्रह्मश्रुतं मतं प्रतिबोधविदितं चेदमृतत्वं हि विन्दत इत्यर्थः ।

ज्ञानेनामृतत्वं विन्दत इत्युक्तम् । तत्र किं ज्ञानेन सर्वाभीष्टसिद्धिरित्यतो ज्ञानोत्तरकर्मणा चेत्याह- **आत्मनेति ॥** आत्मना ज्ञानोत्तरकालीनयज्ञादि-प्रयत्नेन वीर्यमानन्दातिशयं विन्दते । विद्ययाऽमृतं अविद्यानिवृत्तिमिति ।

**वामनटीका–** उपदेशमुपसंहरति– **प्रतिबोध विदितं मतमिति ॥** एतत् मतं एवं मया भगवत्याः श्रुतितः श्रुत्वा युक्तितो मत्वा विचार्य निर्णयेन विदितम् । त्वमपि मदुपदेशेन इत्थमेव प्रतिबोध । अस्य प्रतिबोधस्य फलमप्युपदिशति– अमृतत्वं हि विन्दते । अतस्त्वमपि तद्बोद्धा चेत् तद् विन्दस इति भावः । ज्ञानमन्तरेणापि स्वशक्त्या महोत्साहेनामृतत्वं विन्दत इत्यत आह– **आत्मनेति ॥** आत्मशक्त्या उत्साहपरिपूर्तिमेव विन्दते । विद्ययैव अमृतत्वं विन्दते पुरुषः ।

**वे.श्रुत्यर्थः–** विजानतां मया ब्रह्म सम्यग् ध्यानविषयीकृतमिति ध्यायतां ध्यायद्भिरविज्ञातम् । अविजानतां मया ब्रह्म विशेषेण ध्यातं न भवतीति जानतां ध्यायतां ध्यायद्भिर्विज्ञातं विशेषेण ध्यातम् । अस्तु साकल्येनाज्ञेयं ब्रह्मेतरेषां किं तत इत्यत आह- **प्रतिबोधेति ॥** येन ब्रह्मोक्तप्रकारेण प्रतिबोधविदितं अपरोक्षज्ञानविषयीकृतं स अमृतत्वं विन्दत इत्यर्थः । यदि ब्रह्म प्रतिबोधविदितं तर्हि अमृतत्वं विन्दते वेदयति प्रापयतीति वाऽर्थः । प्रतिबोधः कथं स्यादित्यत आह- **मतमिति ॥** उपलक्षणमेतत् । ननु 'अपाम सोमममृता अभूम' इत्यादिश्रुतौ कर्मणोऽमृतत्वसाधनत्वेनोक्तत्वात् कथं ज्ञानस्य मोक्षसाधनत्वमिति चेन्न । प्रवृत्तकर्मणो मोक्षसाधनत्वायोगेन निवृत्तकर्मण एव

तत्साधनत्वं वाच्यम् । तत्र किं ज्ञानपूर्वं कृतस्य तस्य मोक्षसाधनत्वं ज्ञानोत्तरं कृतस्य वा । नाऽद्यः । तस्य ज्ञानजन्मन्येवोपयोगात् । द्वितीये त्वाह- **आत्मनेति ॥** ज्ञानोत्तरकृतकर्मजन्यात्मप्रसादेन वीर्यं मुक्तावानन्दातिशयं विन्दते । अमृतम् अमृतत्वम् अविद्यानिवृत्तिरुपां मुक्तिं तु विद्ययैव विन्दत इत्यर्थः ॥४॥

**नृसिंहप्रकाशिका–** अस्तु ब्रह्म साकल्येनाविषय इति । इतरेषां कथं तेनाभीष्टसिद्धिरित्यत आह- **प्रतिबोधेति ॥** येन ब्रह्म विदितं श्रुतं मतम् । युक्तिभिरनुचिन्तितं प्रतिबोधविदितमपरोक्षीकृतमिति अमृतत्वं मोक्षं विन्दते । तर्हि ज्ञानमात्रेण सम्पूर्णमोक्षसिद्धिरित्यतो ज्ञानोत्तरकर्मणाचेत्याह- **आत्मनेति ॥** आत्मना ज्ञानोत्तरकालीनप्रज्ञादिप्रयत्नेन । वीर्यं आनन्दातिशयं विन्दते । विद्यया अमृतं अमृतत्वं अनिष्टनिवृत्तिं विन्दते ॥४॥

**स.भाप्यविवृतिः–** अस्तु कात्स्र्येन ब्रह्म वेदनीयं कथं तर्हि तेनाभीष्टसिद्धिः । इत्यतोऽभ्यधात्- **प्रतिबोधेति ॥** यस्य ब्रह्म मतम् । उपलक्षणमेतत् । श्रुतं ध्यातं च अथ प्रतिबोधविदितं अपरोक्षीकृतं सोऽमृतत्वं मोक्षं विन्दते हि । तर्हि ज्ञानमात्रेण किं सम्पूर्णमोक्षसिद्धिरित्यतो न तावन्मात्रेण अपि तर्हि ज्ञानोत्तर-कालानुष्ठितनिवृत्तकर्मणा चेत्याचष्ट- **आत्मनेति ॥** आत्मना ज्ञानोत्तरकालीन-यज्ञादिप्रयत्नेन आत्मा यत्नो धृतिर्बुद्धिस्वभावोब्रह्मवर्ष्मचेत्यमरः । वीर्यं आनन्दातिशयम् । विन्दते विद्यया अमृतं अमृतत्वं अनिष्टनिवृत्तिं विन्दते ।

**व.उ.मन्त्रार्थः-** एवं च साकल्येनाज्ञेयत्वं ब्रह्मण इत्याह- **प्रतिबोधेति ॥** ब्रह्म प्रतिबोधविदितं प्रकृष्टज्ञानविषयीकृतं मतं सदमृतत्वं मोक्षं विन्दते लभ्यते । न केवलं ज्ञायमात्रेण सम्पूर्णमोक्षप्राप्तिः किन्तु सम्पूर्णमोक्षार्थं कर्माप्यपेक्षितमित्याह- **आत्मनेति ॥** आत्मना आत्मसामर्थ्येन ज्ञानोत्तरकालीन-कर्मानुष्ठानरूपेण वीर्यं आनन्दातिशयलक्षणं विन्दते । प्राप्नोति । विद्यया ब्रह्मज्ञानेनामृतं अविद्यानिवृत्तिरूपं मोक्षं विन्दत इति ॥४॥

**खण्डार्थः–** ब्रह्मण साकल्येनाज्ञेयत्वे कथं तेनेष्टसिद्धिरित्यतः स्वस्वयोग्यैकदेश-ज्ञानादेवेष्टसिद्धिरित्याह- **प्रतिबोधविदितमिति ॥** श्रुतमिति शेषः । स्वस्वयोग्य-तानुसारेण पुम्भिः श्रुतं मतं विचारितं विदितं ब्रह्म विन्दते लभते । प्रापयतीत्यर्थतया

वा योज्यम् । हि प्रसिद्धम् । न कश्चिद् ब्रह्मवित्सृतिमनुभवति । मुक्तो ह्येव भवति इत्यादावित्यर्थः । तथा च सूत्रम्- अनियमः सर्वेषाम् (ब्र.सू.३-३-३५) इति । ज्ञानेनामृतत्वं विन्दते चेत्तेनैव किं स्वयोग्यसर्वानन्द-प्राप्तिरित्यतो न, किन्तु ज्ञानोत्तरकर्मणाऽपीत्याह- **आत्मनेति** ॥ आत्मशब्दोऽत्र ज्ञानोत्तरकालीनयज्ञादि-प्रयत्नपरः । आत्मना आत्मीययज्ञादिप्रयत्नेन वीर्यं आनन्दातिशयं विन्दते लभते । विद्यया अपरोक्षज्ञानेन अमृतम् अविद्यापरिहाररुपां मुक्तिं प्राप्नोति । इति विद्धीत्यनुषङ्गेण योज्यम् ॥४॥

### उपनिषत्

**इह चेदवेदीदथ सत्यमस्ति नचेदिहावेदीन्महती विनष्टिः ।**
**भूतेषु भूतेषु[१]विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥५॥**

॥ इति द्वितीयः खण्डः ॥

### भाष्यम्

नेदं जीवस्वरूपं तद् ब्रह्म विष्ण्वाख्यमव्ययम् ।
किन्तु यत्ते समीपस्थमास ते विनियामकम् ॥

तदेव ब्रह्म विद्धि त्वं विष्ण्वाख्यं परमव्ययम् ।
नियामकं तद्देवानां मर्त्यानां किमुतोत्तमम् ॥

तत्प्रसादं विना जीवे मन्तव्या न प्रवृत्तयः ।
किमु जीवस्य तद्भावो न मन्तव्य इतीर्यते ॥

॥ इति द्वितीयखण्डभाष्यम् ॥

**व्यासतीर्थीयम्–** अस्तु ब्रह्मज्ञानं मोक्षसाधनम् । तत्कालान्तरे सम्पादयिष्यत इत्यत आह- **इहेति** ॥ अथ तर्हि सत्यं भद्रमस्ति । भद्रविनष्टिभयात् धीरा भूतेषु भूतेष्वित्यादि योज्यम् ॥

॥ इति द्वितीयःखण्डः ॥

---

१. विचित्य

**वामनटीका–** तथाऽपि सा विद्या पारलौकिकफलत्वात् परत एवोत्पादनीया । तस्मादिह नहि मीमांस्यमित्यत आह– **इह चेदिति ॥** इह जन्मनि लोके वा, ब्रह्मस्वरूपं अवेदीच्चेत् अथ प्रेत्य परलोके सत्यं नित्यफलममृतत्वमस्य अस्ति । इह ज्ञानिसद्भावेऽपि नावेदीच्चेत्, महती विनष्टिर्भवति । तथाहि– परतत्त्वद्वेषेण नावेदीच्चेत् नित्यनिरयप्राप्तिर्भवति । औदासीन्येन चेन्नित्यसंसारो नियतः । यथाशक्ति प्रवृत्तिराहित्येन चेत् भक्तानां मुक्तिविलम्बः । मुक्तिराहित्येनासुरादीनामेषा विशिष्टनष्टिः स्वस्वयोग्यतानुसारेण महत्येव भवति । तस्माद् यथाशक्ति इहैव ब्रह्म वेदितव्यम् । 'इहैव दृष्टिं परमस्य विन्देत्' इति श्रुत्यन्तरे । तदेतद् विद्वांसो धीराः सर्वभूतेषु नियामकत्वेन स्थितं विष्ण्वाख्यं ब्रह्म विचिन्त्य विज्ञायोपास्य अस्माल्लोकात् प्रेत्य अमृता भवन्ति ॥

अत्राऽहुः– नैवं ब्रह्मोपास्तिर्भेदेन कर्तव्या । किन्तु सर्वजीवेषु ब्रह्मस्वरूपमेकीकृत्य 'अहमेतदस्मि' इत्यभेदेनैव सा कार्या । जीवानां ब्रह्मभावापरोक्ष्यस्यैव मोक्षत्वादिति । तदेतदनाद्यज्ञानविजृम्भितम् । नह्येकीभाववाचकं वचनमिह श्रूयते । चिनुधातोः संयोगार्थतया साक्षाद् भेदपरत्वात् । नच जीवस्य ब्रह्मभावो मोक्षः कल्प्यः । सहभावस्यैव मोक्षत्वश्रवणात् । तस्मादुपास्तिरपि भेदेनैव युक्ता । एवमेव हि पूर्वत्राप्युपास्तिर्विस्पष्टमुपदिष्टा 'यद् वाचाऽनभ्युदितम्' इत्यादौ । तत्र हि तत्तन्नियामाकत्वादिविशेषलक्षणमुक्त्वा, 'तदेव ब्रह्म विद्धि' इति सावधारणमुपदिष्टम् । नहि जीवस्वरूपं ब्रह्म विद्धीत्युपदिष्टम् । प्रत्युत यदिदं जीवस्वरूपं केचिदज्ञा ब्रह्मेति उपासते त्वं तु नैवं ब्रह्मेति विद्धीति निषिद्धं च । नहि नियम्यनियामकयोरेकीभावो युज्यते । अत्यन्तविरुद्धलक्षणत्वात् । तदेतदाह– **'नेदं जीवस्वरूपं तत्'** इत्यादिना । तस्मात् सर्वभूतनियामकं पुरुषमुपास्यैवामृता भवन्तीति सिद्धम् । तथाच श्रुत्यन्तरम्– 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' (मैत.उ.२.८.३.७) इत्यादि ॥५॥

### ॥ इति द्वितीयःखण्डः ॥

**प्रकाशिका–** ''नेदं यदिदमुपासते'इति बहुशोऽभ्यस्तवाक्यस्यार्थमाह- **नेदमिति ॥** हे जीव विष्ण्वाख्यं तद् ब्रह्म इदं परिदृश्यमानं जीवाख्यं तव

स्वरूपं न । तथा सति जीवस्यैव विष्णुत्वेन सर्वेन्द्रियप्रेरकत्वसम्भवात् 'केनेषितम्' इत्यादिप्रश्नस्यासङ्गतिप्रसङ्गः । यत्ते उप समीपे हृदीत्यर्थः आस ते नियामकतया आस्ते । जीवानां हृदि जडगगनस्यापि सत्वेन तस्य च ब्रह्मत्वायोगात् श्रुतिर्नियामकत्वमभिप्रैति । अत एवोक्तं भाष्ये- 'ते विनियामकम्' इति । यदिदमुपासते लोकाः इदं ब्रह्म न किन्तु तदेव ब्रह्मेति व्याख्याने तच्छब्देन परामर्शयोग्ययच्छब्दोदितार्थस्य पूर्वमभावादुत्तरत्र चाभावाद्वाक्यमपरिपूर्णं स्यात् 'साकाङ्क्षं वाक्यमनर्थकम्' इति हि प्राचां वाच इत्यान्तरानुपपत्तिः 'अथातो ब्रह्मजिज्ञासा' इति जिज्ञासारूपोपास्तिविषयत्वस्य ब्रह्मण्येव सूत्रकृता विधानाद्ब्राह्यानुपपत्तिश्चेत्युभयतः पाशारज्जुः परस्य । न च तत्रापि वेदान्तानामेवोपास्यत्वं न ब्रह्मण इति वाच्यम् । श्रुतहान्यश्रुतकल्पना-प्रसङ्गात् । 'येन चक्षूंषि पश्यति' इत्यत्र अन्यत्रादृष्टमतीन्द्रियेन्द्रियद्रष्टृत्वं कथं भगवत इति चोद्यं चक्षूंषीति विलक्षणप्रयोगेन श्रुतिरेव दूरीचकार । येन परमात्मना तत्कृपयेत्यर्थः रमाब्रह्मादियोगिनां समूहोऽपि चक्षूंषि पश्यति तस्य दर्शने शक्तिः किं वाच्येति हेतुमुपलक्षणतयोपपाद्य तस्मात्तेन चक्षूंषि दृश्यत इति साध्यमपि श्रुतिः सूचयतीत्यर्थः ।

'दहरमेवापि नूनम्' इत्यत्र दहरमल्पमित्यर्थः । 'यदस्य त्वम्' इत्यत्र त्वं त्वयि अस्य परमात्मनो यद्रूपमस्वतन्त्रत्वदिन्द्रियप्रेरकदेवेष्वप्यस्य परमात्मनो यद्रूपं तत्ते नु मीमांस्यमेव विचार्यमेव । देवेष्विति सप्तमीपङ्क्तिपतितत्वात् त्वम्पदमपि सप्तम्यन्तमिति भावः । अन्यथा प्रायपाठविरोधः स्यात् । 'यो नस्तद्वेद' इत्यत्र नोऽस्माकं ज्ञानिनां मध्ये यस्तद् ब्रह्म वेदेति वेद स तद् ब्रह्म नो वेदेति वेदपदस्याऽवृत्या योजना । न वेदेति यो वेद स तद् ब्रह्म वेद चेति पदानां परस्परमन्वयो ज्ञेयः ।

**॥ इति द्वितीयः खण्डः ॥**

**वे.विवरणम्–** अप्रतीतेर्नेदं यदिदमुपासत इति वाक्यं व्याचष्टे- **नेदमिति ॥** इदमित्यनुवादेन जीवस्वरूपमिति व्याख्यानम् । तद्ब्रह्मेत्युक्त्या श्रुतौ नेदमित्यत्र तद्ब्रह्मेत्यनुवर्तनीयमित्युक्तं भवति । किन्त्विति शेषोक्तिः । उपेत्यस्यार्थः

समीपस्थमिति । आसते आस्ते । ननु हृदयावकाशादेरपि समीपस्थत्वात्कथं तद्ब्रह्म स्यादित्यत आह- **विनियामकमिति ॥** तत्त्वाभिमानिदेवताव्यवच्छेदाय विशेषार्थकवीत्युपसर्गः । तदेव ब्रह्मेत्येतत्पराभिमतनिर्गुणब्रह्मपरमिति प्रतीति-निरासायाह- **विष्ण्वाख्यमिति ॥** ब्रह्मणो जीवस्वरूपत्वाभावः कुत इति चेत् । श्रोत्रस्य श्रोत्रमित्यादिना देवनियामकत्वस्योक्तत्वात् । न हि नियम्यनियामकयो-रभेदः सम्भवति । तद्भावस्य भेदव्याप्तत्वादिति भावेनाह- **नियामकमिति ॥** तर्हि देवैरेव भेदः सिध्यतु न तु मर्त्यैः तन्नियाामकत्वस्यानुक्तत्वादित्यत आह-**मर्त्यानामिति ॥** नियामकमिति वर्तते । यदाऽमराणां देवानां नियामकतया ब्रह्मोक्तं तदा मर्त्यनियामकत्वमुक्तप्रायमेवेतिभावः । अधीत्युक्तयुक्त्यन्तरमाह-**उत्तममिति ॥** आत्मना विन्दतेवीर्यमित्यादिवाक्याभिप्रेतयुक्त्यन्तरमाह-**तत्प्रसादमिति ॥** प्रवृत्तयो मोक्षसाधनानुष्ठानरूपाः । प्रसादं प्रेरणमिति वा ॥

**॥ इति द्वितीयः खण्डः ॥**

**वे.श्रुत्यर्थः–** अस्त्वेवं ब्रह्मज्ञानं मोक्षसाधनं, तत् कालान्तरे सम्पादयिष्यत इत्यत आह- **इहेति ॥** इह मदादिरूपे सद्गुरौ प्राप्ते सति चेद् यदि भवदादिरवेदीत् ब्रह्मस्वरूपम् अथ तर्हि सत्यं भद्रं मोक्षादिरूपं अस्ति । सद्गुरूपदेशजन्यज्ञानस्यैव मोक्षसाधनत्वात् । चेत् यदि इह ब्रह्मस्वरूपं नावेदीत् । तर्हि महती विनष्टिरन्धन्तमःप्राप्तिरूपा ।

**असुराणां तमःप्राप्तिः तदा नियमतो भवेत् ।**
**यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत्परम् ॥**

एवं सद्गुरूपदेशोल्लङ्घनेऽनर्थप्राप्तिसद्भावाद् धीरा धीमन्तो भूतेषु सर्वभूतेषु मध्ये भूतेषु गुरुत्वेन प्राप्तेषु सत्सु विचिन्त्यायं मम समग्रानुग्रहपूर्वकं ब्रह्मोपदेक्ष्यतीति निश्चित्य अस्मात् समग्रानुग्रहकर्तृत्वेन निश्चितात् लोकात् लोक्यतेऽनेनेति लोकः गुरुस्तस्मात् तदुपदेशेनेति यावत् । प्रेत्य सम्यक् परब्रह्मस्वरूपं ज्ञात्वा स्वयमपरोक्षीकृत्य च । अस्माल्लोकात् चरमत्वेन निश्चितात् शरीरात् प्रेत्यामृता भवन्तीत्यर्थ इति ॥ ४ ॥

**॥ इति द्वितीयः खण्डः ॥**

**नृसिंहप्रकाशिका–** अस्तु ब्रह्मज्ञानं मोक्षसाधनम् । कालान्तरे सम्पादयिष्ये इत्यत आह- **इहेति** ॥ इह जन्मनि पूर्वे वयसि चेत् यदि ब्रह्म अवेदीत् । अथ तर्हि । सत्यम् भद्रम् । अस्ति । यदि इह नावेदीत् । तर्हि महती विनष्टिः अनर्थः । तस्मात् धीराः भूतेषु भूतेषु सर्वप्राणिषु नियामकत्वेन परमात्मानं विचिन्त्यास्मात् लोकात् प्रेत्य अमृता भवन्ति ।

**॥ इति द्वितीयः खण्डः ॥**

**स.भाष्यविवृतिः–** अस्तु ब्रह्मज्ञानं मोक्षसाधनं तत्कालान्तरे सम्पादयेयम् इत्यतः आचख्यौ- **इहेति** ॥ इह जन्मनि । पूर्वे वयसि ब्रह्म अवेदीत् व्यजानाच्चेत् । अथ तर्हि सत्यं भद्रमस्ति यदि इह नावेदीत् । तर्हि महती विनष्टिः महान् दोषः तस्मात् भूतेषु भूतेषु धीराः धीमन्तः ब्रह्म विचिन्त्य सर्वप्राणिषु नियामकं ज्ञात्वास्माल्लोकात् प्रेत्य मृत्वा अमृता भवन्ति स्वरूपानन्दानुभविनो भवन्ति- यो नस्तद्वेद नो इति अविज्ञातं विजानतां इति वाक्यद्वयं आतीथपत् । सर्वात्मना विजानामीति तु यस्य मतं भवेत् । तस्याज्ञातः स भगवानित्यंशेन । कुत इत्यतः । उक्तार्थे हेतुमुपन्यास्थत् । यं सम्यङ्नैवेति यं कश्चिदपि निर्विशेषतः कार्त्स्नेन न जानाति तं कथमपरो जानीयात् ।

**॥ इति द्वितीयः खण्डः ॥**

अयमत्र प्रयोगः साकल्येन ब्रह्म जानामीति मन्यमानः न सम्यग्ब्रह्मवेदिता । ब्रह्मावृत्तिपरिच्छिन्नत्वप्रकारकब्रह्मज्ञानित्वात् । यः यदवृत्तिधर्मप्रकारकयद्विशेष्य-ज्ञानवान् स तद्विशेष्ययाथात्म्यज्ञानवान् न भवति । यथा घटं घटत्वेन जानानोऽप्यपृथिवीत्वेन जानान इति । न वेदेति वेद च विज्ञातमविजानतां इत्येतावंशौ 'यो नैवं मन्यते सदा' । ज्ञातस्तस्येत्यनेन व्याख्यातमन्त्रे 'मतं यस्य न वेद सः' इत्यंशस्य तथास्यैव निःशेषमननं कृतम् । इति 'यो मन्यते नास्य मतस्सः पुरुषोत्तम' इत्यंशेनार्पणम् । ब्रह्मणः अपरिच्छिन्नमहिमत्वाज्ञेयत्व-जेतृत्वादिशक्तिप्रदत्वसर्वदेवोत्तमत्वनियामकत्व सर्वस्वातन्त्र्यपारतन्त्रादिराहित्य-सर्वाधारत्वसर्वशक्तित्वानौपमत्वादिनाख्यायिकां प्राददर्शत् ।

॥ इति द्वितीयः खण्डः ॥

**वरदतीर्थीयम्-** 'नेदं यदिदमुपासते' इत्यस्य पूर्वमव्याख्यातत्वात् अप्रतीतिनिरासाय व्याचष्टे- **नेदमिति** ॥ जीवस्वरूपं ब्रह्म न भवतीत्यत्र उपपत्तिमाह- **भाष्यकारः नियामकमित्यादिना** ॥

**॥ इति द्वितीयः खण्डः ॥**

**व.उ.मन्त्रार्थः-** इदं च ब्रह्मज्ञानं मानुषाद्युत्तमजन्मप्राप्तावेव सम्पादनीयम् । अन्यथा महती हानिरित्याह इहेति । इह अस्मिन् मानुषजन्मनि ब्रह्मवेदी चेत् ज्ञातवांश्चेत् पुरुषः अथ तर्हि तस्य पुरुषस्य सत्यमस्ति श्रेयोस्ति । अस्मिन्जन्मनि नावेदि चेत् महतीविनष्टिः हानिर्भवतीति । ज्ञानिनां श्रेयो नास्तीत्युक्तं किन्तु तत् श्रेय इत्यत आह- **भूतेष्विति** ॥

**॥ इति द्वितीयः खण्डः ॥**

**खण्डार्थः–** अस्तु स्वयोग्यब्रह्मज्ञानमभीष्टदं, तत् कदा सम्पादनीयमित्यत आह- **इहेति** ॥

ज्ञानयोग्ये ब्राह्मणादिदेहे अवेदीच्चेत् व्यजानाच्चेद् ब्रह्म अथ तर्हि सत्यमस्ति । सत्यशब्दस्य सच्छब्दपर्यायत्वात्सच्छब्दस्य च 'सद्भावे साधुभावे च' इति वचनात्साध्वस्ति भद्रमस्तीत्यर्थः । इह चेन्नावेदीत्तदा महती विनष्टिः हानिर्भवति । अतो ज्ञानाज्ञानाभ्यां साध्वनिष्टयोर्भावात् धीरा भूतेषु भूतेषु सर्वभूतेषु ब्रह्म विचिन्त्य ज्ञात्वा अस्माल्लोकात् प्रेत्य अमृता भवन्तीति ।

**॥ इति द्वितीयः खण्डः ॥**

# अथ तृतीयखण्डः

## उपनिषत्

**ब्रह्म ह देवेभ्यो विजिग्ये । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । त ऐक्षन्त । अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥१॥ तद्धैषां विजज्ञौ ॥ तेभ्यो ह प्रादुर्बभूव । तन्न [१]व्यजानत । किमिदं यक्षमिति ॥२॥**

## भाष्यम्

इत्यत्राख्यायिकां वच्मि श्रुणु तां त्वं महेश्वर ।
स्थित्वा देवेषु तद् ब्रह्म व्यजयद्दैत्यदानवान् ॥

देवेभ्योऽर्थाय विजयं ते देवा मेनिरे स्वकम् ।
आविष्टा असुरैस्तेषां प्रबोधाय जनार्दनः ॥

यक्षरूपः प्रादुरभूदुमाशिवसमन्वितः ।
ब्रह्मणा चापि सहित एतेभ्योऽपि परो ह्ययम् ॥

एतेऽपि मे भृत्यभूताः परिवार्य व्यवस्थिताः ।
इति ज्ञापयितुं विष्णुः सह तैरप्युपागतः ॥

यूयमेतानपि ज्ञातुमशक्ताः किमु मामिति ।

**व्यासतीर्थीयम्–** ब्रह्मादृश्यमत्यद्भुतमित्युक्तम् । तत्रार्थे काञ्चनाख्यायिकामाह- **ब्रह्म हेत्यादिना ॥** तत् तेषामहङ्कारं तेभ्यो ह प्रादुर्बभूव । ब्रह्मादिसहितमितिशेषः । तद्वाक्यजातं व्याकरोति- **इत्यत्रेत्यादिना ॥** ब्रह्मादिभिः सहागमनस्य जिज्ञापयिषितं प्रयोजनमाह- **एतेभ्योऽपीति ॥** प्रयोजनान्तरमाह- **यूयमिति ॥**

**वामनटीका–** देवानामपि पारतन्त्र्यातिरेकाद् ब्रह्मत्वं दूरतो निवारितमिति यदुक्तं तत्रेदमुपाख्यानं वक्ति– 'ब्रह्म ह देवेभ्यो विजिग्ये' इत्यादि । अस्याभिप्रायं कथयति– इत्यत्राख्यायिकां वच्मीत्यादिना । स्थित्वा देवेषु तद्

ब्रह्म यत् सर्वभूतसंस्थं पुरस्तादुक्तं तद् ब्रह्म देवेषु नियन्तृत्वेन स्थित्वा देवेभ्यः प्रयोजनाय असुरान् विजिग्ये । तं जयं देवाः परकृतमपि स्वकृतं मेनिरे । 'तद्धैषां विजज्ञौ' । तेषां तत् अन्यथामननं तद् ब्रह्म विजज्ञौ व्यजानात् ।

**प्रकाशिका–** 'ब्रह्म ह देवेभ्यो विजिग्ये' इत्यत्र देवेभ्य इति चतुर्थी । देवानामर्थ इत्यर्थः । तद्धैषाम् इत्यत्र तत् त ऐक्षन्तेत्युक्तमस्माकमेवायं महिमेतीक्षणमर्थः । तेभ्यो ह प्रादुर्बभूव इत्यत्र तेभ्य इति चतुर्थी देवानां प्रयोजनायेत्यर्थः ।

**वे.विवरणम्–** इदानीं ब्रह्म ह देवेभ्यो विजिग्ये इत्यादिकं प्रकृतासङ्गतं किमर्थमुच्यत इत्याशङ्कापरिहाराय तस्य सङ्गतिं करोति- **इत्यत्रेति** ॥ ब्रह्मणः साकल्येन देवाज्ञेयत्वे । इदानीं तद्वाक्यं व्याचष्टे- **स्थित्वेति** ॥ यदि ब्रह्म रामकृष्णाद्यवताररूपेण दैत्यदानवानजयत् तदा तज्जये कथं देवानां स्वकीयत्वभ्रमः स्याद् विशेषदर्शनसत्वादित्यत उक्तम्- **स्थित्वा देवेष्विति** ॥ दैत्यदानवानिति शेषोक्तिः । देवेभ्य इत्येतत् पञ्चमीति भ्रमनिरासाय तदनूद्य विभक्त्यर्थमाह- **देवेभ्योऽर्थायेति** ॥ अनेन तादर्थ्ये चतुर्थीत्युक्तं भवति । अथ तस्य ह ब्रह्मणः इत्यारभ्य अयं महिमा इत्यन्तवाक्यं व्याचष्टे- **विजयं तमिति** ॥ ब्रह्मज्ञानिनां देवानामेवं भ्रमः कुतः? इत्यत आह- **आविष्टा इति** ॥ तेभ्यो ह प्रादुर्बभूव इति वाक्यं व्याचष्टे- **तेषामिति** ॥ किमिदं यक्षमिति इत्याद्युत्तरवाक्यानुसारेण यक्षरूप इत्युक्तम् । किं सर्वेषामपि देवानां भ्रमः? नेति भावेनाऽह- **उमेति** ॥ एवशब्द इन्द्रादिव्युदासाय । अत्र यद्यपि तस्मिन्नेवाऽकाशे स्त्रियमाजगाम इत्युत्तरवाक्यपर्यालोचनया उमासहित एव प्रादुरभूदिति ज्ञायते । तेन चोमाया एव नैतादृशभ्रमवत्वमिति गम्यते । तथाऽपि उमायास्तादृशभ्रमाभावे तदधिकस्य शिवस्य ततोऽधिकस्य ब्रह्मणश्च सुतरामेवंविधभ्रमाभावः सिद्ध इति भावेन शिवसमन्वितो ब्रह्मणा चैव सहित इत्युक्तम् । ननूमादीनां तादृशभ्रमाभावे तैः सह प्रादुर्भावे किं कारणम् । न चेन्द्रोपदेशार्थं तैः सह प्रादुर्भावः । तथाऽपि रुद्रब्रह्मसाहित्यस्य व्यर्थत्वात् इत्याशङ्कां परिहरति- **एतेभ्योऽपीति** ॥ यदाऽहमेतेभ्यो भवदुत्तमेभ्योऽपि पर उत्तमः । किमु भवद्भ्यः । युष्मदधिका एतेऽपि मे भृत्यभूताः, किमु यूयम् । तथा च मदीय एवायं विजय इति न

युष्माभिस्तथा भ्रमः कार्य इति ज्ञापयितुं तैरपि सहोपागत इत्यर्थः । प्रयोजनान्तरमाह- **यूयमिति ॥** इति ज्ञापयितुं विष्णुः सह तैरप्युपागतः इति पूर्वेण सम्बन्धः ।

**वे.श्रुत्यर्थः–** साकल्येन देवाज्ञेयः परमात्मेत्यत्रार्थे काञ्चनाऽख्यायिकामाह- **चतुर्मुखः ब्रह्मेति ॥** ब्रह्म देवान्तर्यामिरूपं देवेभ्यो देवार्थं देवानाम् ऐश्वर्यप्राप्त्यर्थं विजिग्ये व्यजयत् । दैत्यदानवान् इति शेषः । तस्य देवान्तर्यामिणो ब्रह्मणः दैत्यादिविजये सति देवा अमहीयन्त । अहङ्कारं कृतवन्तः । कथम् ते देवा अयं विजयो दैत्यदानवविजयोऽस्माकमेव न ब्रह्मणः । तथाचायं महिमाऽस्माकमेवेत्यैक्षन्त ज्ञातवन्तः । एवं देवैः अहङ्कारे कृते सति तद् देवान्तर्यामिरूपं ब्रह्म एषां देवानां तद् अहङ्कारं विजज्ञौ ज्ञातवान् ।

एवं ज्ञात्वा तेभ्यो देवेभ्यो देवानां स्वस्वरूपज्ञापनाय यक्षरूपं सद् ब्रह्मवायुशेषगरुडरुद्रैः सभार्यैः सह प्रादुर्बभूव । एवं ब्रह्मणि प्रादुर्भूते ते देवाः तत् प्रादुर्भूतं न व्यजानत न ज्ञातवन्तः । प्रत्यक्षतो दर्शनात् कथं न व्यजानतेत्यत आह- **किमिति ॥** इदं परिदृश्यमानं यक्षं किमिति किं रूपमिति न व्यजानतेति सम्बन्धः ॥१-२॥

**नृसिंहप्रकाशिका–** ब्रह्मादृश्यमित्यद्भुतमित्युक्तम् । तत्रार्थे काञ्चनाख्या-यिकामाह- **ब्रह्मेति ॥** ब्रह्म देवेभ्यः विजिग्ये ह । इन्द्रादिदेवाभीष्टसिद्ध्ये इन्द्राद्यन्तर्गतः सन् असुरान् व्यजयत् । एतत् प्रमाणसिद्धम् । एवं तस्य ब्रह्मण एव विजये सति इत्याविष्टा इन्द्राद्यास्तं विजयं स्वकं मत्वा अमहीयन्त । महिमवत्वेन अहङ्कारयुक्ता अभवन् ।

अहङ्कारप्रकारं दर्शयति- **त इति ॥** ते देवाः अस्माकमेवायं विजयः अस्माकमेवायं महिमेति । एक्षन्त व्यजानन् । तत् ब्रह्म । एषां देवानां तत् साहङ्कारलक्षणम् । विजज्ञौ । व्यजानत् । देवानामहङ्कारशान्तये ब्रह्मरुद्रोमासहितं परं ब्रह्म यक्षस्वरूपं सत् तेभ्यः प्रादुर्बभूव । ब्रह्मरुद्रादिज्ञानेऽपि भवतां व्यावृत्यर्थं किमु तज्ज्ञाने इति दर्शयितुं तैः सहागतं इन्द्रोपदेशे साक्षाद्गुरुमेवेति ज्ञापयितुं उमया सहागतम् ॥१-२॥

**स.भाष्यविवृतिः–** 'ब्रह्म ह देवेभ्यो विजिग्ये' इत्यस्मादारभ्य 'विदाञ्चकार ब्रह्म' इतीत्यन्तेन । इन्द्रादिदेवानां अभीष्टाय इन्द्राद्यन्तर्गतः सन् असुरान् व्यजैष्ट । तस्य देवान्तर्यामिब्रह्मणः दैत्यादिविजये सति देवा अमहीयन्त । मर्हाङ् पूजायां कण्ड्वादिः । आत्मनः सम्भावयाञ्चक्रिरे । पूर्वदेवावेशवशंवदः कथमयं दैत्यदानवविषयो विजयः । अस्माकमेव नान्यस्य अयं महिमा अस्माकमेवेति ऐक्षन्त अपश्यन् । तद्ब्रह्मप्र एषां देवानां तत् आत्मसम्भावनं विजज्ञौ व्यज्ञासीत् । ज्ञात्वा तेभ्यो देवेभ्यः देवानां स्वस्वरूपज्ञापनाय यक्षरूपं सत् ब्रह्मवायुशेषगरुडरुद्रैः सभार्यैः सह प्रादुरभूत् । ते देवाः तद्यक्षरूपं न व्यजानत । नावबुध्यन्त । प्रत्यक्षतो दर्शनात् कथमनवबोधः इत्यतो ब्रूते- **किमिति ॥** इदं परिदृश्यमानं यक्षं किं किं धर्मावच्छिन्नं इति न व्यजानतेति पूर्वेण सम्बन्धः ।

**वरदतीर्थीयम्-** ब्रह्मादृश्यमित्यत्र आख्यायिकोच्यते 'ब्रह्म ह देवेभ्यो विजिग्ये' इत्यादिना । तां व्याचष्टे- **इत्यत्रेत्यादिना ॥** यक्षरूपस्य विष्णोः ब्रह्मादिसाहित्येन प्रादुर्भावे किं निमित्तमिति तत्राह- **एतेभ्योऽपीति ॥** तैस्सह प्रादुर्भावे निमित्तान्तरञ्चाह- **यूयमिति ॥**

**व.उ.मन्त्रार्थः-** ब्रह्म ह देवेभ्यो विजिग्ये इति देवेषु स्थित्वा देवेभ्यो अर्थाय दैत्यान् विजिग्य इत्यर्थः । अमहीयन्त अपूज्यन्त । तद्धैषां विजज्ञौ इति । तत् ब्रह्म तेषां मनोगतं व्यजानादित्यर्थः ॥१-२॥

**खण्डार्थः–** अत्यद्भुतत्वात् ब्रह्म साकल्येनाज्ञेयमित्युक्तेऽर्थे काञ्चनाऽख्यायिकामाह- **ब्रह्मेति ॥** देवानां दैत्यदानवैर्युद्धे प्रस्तुते सति ब्रह्म देवानाविश्य देवेभ्यो देवानामर्थे दैत्यादीन् विजिग्ये व्यजयत् । हेति । निश्चितमेतदित्यर्थः । अथ विजयानन्तरं तस्य देवेष्वाविष्टस्य ब्रह्मणो विजये सति देवा अमहीयन्त अपूज्यन्त । मर्हाङ् पूजायामित्यस्मात् 'कण्ड्वादिभ्यो यक्' इति यक् प्रत्ययः । गर्विणो अभवन्निति यावत् । हेत्याश्चर्यम् । ब्रह्मणो विजये कुतो देवानां गर्व इति तदेव व्यनक्ति - **त इति ॥** ते देवा अस्माकमेवायं विजयोऽस्माकमेवायं महिमेत्यैक्षन्त व्यजानन् । एषां देवानां तद् असुरावेशकृतेश्वराज्ञाननिमित्त-

महङ्कारादिकं विजज्ञौ व्यजानात् ब्रह्मेत्यनुषङ्गः । तेभ्यो देवेभ्योऽर्थे देवानां स्वात्मतत्त्वबोधाय यक्षरूपतया प्रादुर्बभूव ब्रह्मेत्यर्थः । उमाशिवचतुर्मुखसहितं सदिति योज्यम् । तद् यक्षरूपं ब्रह्म इदं यक्षं किमिति न व्यजानन्त न व्यजानन् ॥१-२॥

## उपनिषत्

**तेऽग्निमब्रुवन् । जातवेद एतद् विजानीहि किमेतद् यक्षमिति । तथेति ॥ ३ ॥ तदभ्यद्रवत् । तमभ्यवदत् कोऽसीति । अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ ४ ॥ तस्मिंस्त्वयि किं वीर्यमित्यपि । इदं सर्वं दहेयं यदिदं पृथिव्यामिति ॥ ५ ॥ तस्मै तृणं निदधावेतद् दहेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाक दग्धुम् । स तत एव निववृते । नैतदशकं विज्ञातुं यदेतद् यक्षमिति ॥ ६ ॥ अथ वायुमब्रुवन् । वायवेतद् विजानाहि किमेतद् यक्षमिति । तथेति ॥ ७ ॥ तदभ्यद्रवत् । तमभ्यवदत् कोऽसीति । वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥ ८ ॥ तस्मिंस्त्वयि किं वीर्यमित्यपि । इदं सर्वमाददीयं यदिदं पृथिव्यामिति ॥ ९ ॥ तस्मै तृणं निदधावेतदादत्स्वेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाकाऽदातुम् । स तत एव निववृते । नैतदशकं विज्ञातुं यदेतद् यक्षमिति ॥ १० ॥ अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति । तथेति तदभ्यद्रवत् । तस्मात् तिरोदधे ॥ ११ ॥ स तस्मिन्नेवाऽकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम् । तां होवाच किमेतद् यक्षमिति ॥ १२ ॥**

॥ इति तृतीयः खण्डः ॥

### भाष्यम्

तज्ज्ञानार्थं हुताशश्च नासिक्यो वायुरेव च ।
इन्द्रश्च क्रमशो जग्मुस्तं ज्ञातुं नैव चाशकन् ॥

तत्रेन्द्रोऽधिकबुद्धित्वात्पृच्छतीति जनार्दनः ।
मत्तः शिवाद् ब्रह्मणश्च श्रोतुं नैवापि शक्तिमान् ॥

इति ज्ञापयितुं तत्र नादृश्यत स केशवः ।
एषैव ज्ञानदाने ते योग्योमेति व्यदर्शयत् ॥

॥ इति तृतीयखण्डभाष्यम् ॥

**व्यासतीर्थीयम्–** इन्द्रे समागच्छति किमर्थं तिरोदधे ब्रह्मेत्यतस्तस्य प्रयोजनमाह- **तत्रेति** ॥ पृच्छतु किमशक्यमित्यत आह- **मत्त इति** ॥ दैत्यदूषितत्वान्न शक्तिमान् । उमास्थापने प्रयोजनमाह- **एषेति** ॥

॥ इति तृतीयःखण्डः ॥

**वामनटीका–** तथेति तद् यक्षं अभ्यद्रवत् अग्निः । तं अग्निं अभ्यवदत् तद् यक्षः त्वं कोऽसीति । अग्निरस्म्यहं नाम्ना । जन्मना जातवेदाः । जातमात्र एव सर्वं वेदेति ॥ वायावप्येवमेव योजना न्यायः । स्वनिर्मातरि आकाशे श्वयति वर्धत इति वायुः मातरिश्वा । स विष्णुः स्त्रियमाजगाम आगमयामास । योग्योमेति व्यदर्शयत् । उमैवेन्द्रस्य ज्ञानदाने योग्येति तां व्यदर्शयत् ॥२-११॥

॥ इति तृतीयःखण्डः ॥

**प्रकाशिका–** किं वीर्यमित्यपि इत्यत्र किं वीर्यमित्यपीत्यप्यभ्यवददिति पूर्वेणान्वय इति ज्ञेयम् । 'तत एव निववृते' इत्यत्र ततस्तदुक्तकार्यकारणा-सामर्थ्यादेव निववृत इत्यर्थः । 'तस्मात्तिरोदधे' इत्यत्र यस्मात् त्वं कोऽसीति मां प्रत्येव प्रश्नकरणकौशलवानिन्द्र आजगाम, असुराविष्टमनस्कं प्रति मयैव प्रतिवक्तुमनुचितं तस्माद्धेतोरेव तिरोदधे इत्यर्थः । 'स्त्रियम् उमां ताम्' इत्यस्य पार्वत्या इन्द्रं प्रति साक्षाद्गुरुत्वात्त्वमेव तत्त्वं ब्रूहीति भगवताऽऽज्ञप्तां

त्रियमित्यर्थः । साक्षाद्गुरुश्च साक्षान्माता अप्रक्षालितमलं पुत्रमिव शिष्ये किञ्चिदवद्यमस्ति चेत्तमनुगृह्णीयादिति लोकन्यायः ।

**॥ इति तृतीयः खण्डः ॥**

**वे.विवरणम्–** तेऽग्निमब्रुवन्, अथ वायुमब्रुवन्, अथ हेन्द्रमब्रुवन् इति प्रकरणत्रयस्य तात्पर्यमाह- **तज्ज्ञानार्थमिति** ॥ यक्षरूपब्रह्मज्ञानार्थम् । इन्द्रश्चेत्यत एवेति एवशब्दसम्बन्धः । ननु 'तस्मात् तिरोदधे' इति इन्द्रागमने ब्रह्मतिरोभाव उक्तः । तत्र किं कारणमित्यत आह- **तत्रेति** ॥ तेषु मध्य इत्यर्थः । पृच्छतीति नादृश्यतेति सम्बन्धः । पृच्छतु को दोषः स्वस्य स्वोपदेशा-सामर्थ्याभावादित्यत आह- **मत्त इति** ॥ तर्हि शिवब्रह्मभ्यां ब्रह्मस्वरूपश्रवणं स्यादित्यत आह- **शिवाद् ब्रह्मणश्चेति** ॥ अपिशब्दस्य शिवादित्यनेन सम्बन्धः । नैव शक्तिमान् । इदानीमसुरावेशदुष्टत्वादिति भावः । तत्र इन्द्रे समागते । ननु यदि शिवब्रह्माणौ अतिरोहितौ तथैव स्तः तर्हि अधिकबुद्धिरिन्द्रो यक्षस्वरूपं तावेव पृच्छेत् । तथा च ताभ्यामपि तत्स्वरूपमिन्द्राय वक्तव्यमेवेत्याशङ्कापरिहाराय केशव इत्युक्तम् । कश्च ईशश्च केशौ ताभ्यां वर्तत इति अनेन ताभ्यां सह नादृश्यतेत्युक्तं भवति । उमामात्रदर्शने कारणमाह- **एषैवेति** ॥ इति ज्ञापयितुमित्यनुवर्तते । तामिति शेषः ।

**॥ इति तृतीयः खण्डः ॥**

**वे.श्रुत्यर्थः–** ते प्रादुर्भूतयक्षरूपब्रह्माज्ञानिनो देवा अग्निमब्रुवन् । किमिति? हे जातवेदः एतद् विजानीहि । एतदित्युक्तं विवृणोति- **किमिति** ॥ एवं देवैरुक्तोऽग्निस्तथेति अहं यक्षस्वरूपं विजानामीत्युक्त्वा तद् यक्षरूपं ब्रह्म प्रत्यभ्यद्रवत् । तमागतम् अग्निं त्वं कोऽसीत्यभ्यवदत् । यक्षरूपो हरिः इति शेषः । उत्तरमाह- **अग्निर्वा इति** ॥ यक्षः पुनः पृच्छति- **तस्मिन्निति** ॥ किं वीर्यं सामर्थ्यं वर्तत इति । उत्तरमाह- **अपीदमिति** ॥ यदिदं पृथिव्यां वर्तते इदं सर्वमपि दहेयमित्यग्निरब्रवीत् । एवमग्निना स्वस्य दाहकत्वसामर्थ्योक्तौ यक्षः हे अग्ने त्वयि यदि दाहकत्वसामर्थ्यं तर्हि एतद् दहेति तस्मै तृणं निदधौ स्थापितवान् । एवमुक्तः सोऽग्निः तद् यक्षस्थापितं तृणं सर्वजवेनोपप्रेयाय प्राप्तवान् । प्राप्तोऽपि तत् तृणं दग्धुं न शशाक । सोऽग्निस्तत एव यक्षस्थापित-

तृणदाहनसामर्थ्याभावादेव एतद् विज्ञातुमहं नाशकमिति निववृते निवृत्तवान् । एतदित्युक्तम् विवृणोति- **यदेतद् यक्षमिति ॥** यच्छब्दः किंशब्दार्थः । 'यतश्चोदेति सूर्यः' इत्यादौ तथा दर्शनात् । एवमुत्तरत्रापि व्याख्येयम् ॥

अथाग्निनिवृत्त्यनन्तरम् । वायुं नासिक्यवायुम् । तस्मादिन्द्रगमनाद् इन्द्रगमनं निमित्तीकृत्य, यक्षरूपं ब्रह्म उमाव्यतिरिक्तब्रह्मादिभिः सह तिरोदधे । यस्मिन् प्रदेशे यक्षरूपं ब्रह्म चतुर्मुखादिभिः सह तिरोहितं तस्मिन्नेवाकाशे प्रदेशे स्त्रियं दृष्ट्वा तां प्रत्याजगाम । का सा स्त्रीत्यतः तां विशिनष्टि- **बह्विति ॥** हैमवतीं हिमवतः पुत्रीम् एतद् एतावत्कालं दृष्टं यक्षं किमिति तामुवाच महेन्द्रः ॥३-९॥

## ॥ इति तृतीयः खण्डः ॥

**नृसिंहप्रकाशिका–** ते देवा तत् यक्षरूपं ब्रह्म न व्यजानत । एतत् किं यक्षमिति । तथास्त्वित्युक्तो अभ्यद्रवत् । शीघ्रमगमत् । एतत् यक्षं आगतमग्निं अभ्यवदत् । त्वं कोऽसीति । स च अग्निरहं अग्निर्वै अग्निनामकत्वेन प्रसिद्धः अस्मीत्यब्रवीत् । स्वस्य नामान्तरमाह- **जातेति ॥** पुनस्तद्ब्रह्म । तस्मिन् । एवंनामके त्वयि किं वीर्यं इत्यपि अभ्यवदत् । अपृच्छत् । यक्षं प्रत्यग्निरुवाच । यदिदं पृथिव्यामस्ति । तदिदं सर्वं दहेयमिति । एवमुक्तं तद्यक्षं तस्मै अग्निं प्रति दाहाय । एतदहेत्युक्त्वा तृणं निदधौ । पुरतः चिक्षेप । स अग्निः सर्वजवेन तत् तृणं उप, प्रति प्रेयाय, ययौ । गतोऽग्निस्तत्तृणं दग्धुं न शशाक । सः दाहाशक्तोऽग्निः । तत एव तृणदेशादेव पुनर्यक्षमुखावलोकं न कृत्वा निववृते । निवृत्तोऽग्निः एतत् यक्षं किमिति विज्ञातुं नाशकमिति देवानवदत् । एवमुत्तरवाक्यानि योजनीयानि । तस्मादिन्द्रात् । ल्यब्लोपनिमित्ता पञ्चमी । इन्द्रमधिकम् । बुध्यभिमानिन्युमा । साक्षात् उपदेशयोग्यं ज्ञात्वा दैत्यदूषितत्वेन मत्तः शिवात् ब्रह्म च इदानीं साक्षादुपदेशयोग्यं ज्ञात्वा । उमां स्थापयित्वा ब्रह्मरुद्राभ्यां सह तत् यक्षरूपं ब्रह्म । तिरोदधे । स इन्द्रस्तस्मिन्नेवाकाशे विद्यमानां बहुशोभमानां हैमवतीं हिमवत्पर्वतपुत्रीं उमां स्त्रियं दृष्ट्वा सः समीपमाजगाम । आगत्य । एतत् किं यक्षमिति । तां उवाच ह । उमा तमिन्द्रं प्रति तद्यक्षं विष्ण्वाख्यं परं ब्रह्म ह प्रसिद्धम् । इत्युक्तं च ॥३-९॥

## ॥ इति तृतीयः खण्डः ॥

**स.भाष्यविवृतिः–** एवमजानन्तो देवाः तज्जिज्ञासया अग्निमब्रुवन् । हे जातवेदः एतद्यक्षं त्वं जानीहि । किमेतद्यक्षमिति । तदोमित्यङ्गीकृत्य तद्यक्षरूपं जातवेदा अभ्यद्रवत् । अदुद्रवत् । अभिद्रवन्तं अग्निम् दृष्ट्वा यक्षरूपं कोऽसीत्यब्रवीत् । अग्निस्तु यक्षरूपं प्रति अहमग्निरस्मीत्यब्रवीत् प्रसिद्धं नामान्तरं च जातवेदा वा अहमस्मि इत्यूचे । तमग्निं यक्षरूपं त्वयि किं वीर्यमित्यपृच्छत् अग्निस्तु सर्वमपीद्रं दहेयं यदिदं पृथिव्यां सर्वमित्याह । तदेतद्यक्षरूपं तस्मै अग्नये एतद्दहेति तृणं निदधौ । तत्तृणं प्रत्यग्निः सर्वजवेन उपप्रेयाय । तत्तृणं दग्धुं न शशाक नाशक्नोत् । तत एव तृणादहनेन अप्रतिष्ठया निववृते । अनन्तरं देवानवोचदग्निः । अहं एनं यक्षं किमेतद्यक्षमिति विज्ञातुं नाशकमिति । अथ अग्निनिवृत्त्यनन्तरं वायुं नासिक्यवायुं अब्रुवन् वायो, किमेतद्यक्षमिति त्वं विजानीहि, तथेति तद्यक्षमभ्यद्रवत् । कोऽसीति यक्षः । वायुर्वा अहमस्मीत्यब्रवीत् मातरिश्वा वा अहमस्मीति वायुः । तस्मिन् त्वयि किं वीर्यमिति यक्षः । अपीदं सर्वमाददीयं यदिदं पृथिव्यामिति वायुः । तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजनेन तन्न शशाक आदातुं स तत एवाप्रतिष्ठया निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति देवानाह वायुः अथेन्द्रमब्रुवन् मघवन्नेतद्विजानीहि किमेतद्यक्षमिति देवाः । तथेति अङ्गीकृत्य तद्यक्षमभ्यद्रवदिन्द्रः । तस्मात् इन्द्रागमनात् इन्द्रस्य च अधिकबुद्धित्वात् मां पृच्छेत् ब्रह्माणं वा शिवं वा । । न चायं मत्तः शिवाद्ब्रह्मणो वा श्रोतुं शक्तिमान् किंत्वेषा उमैव इन्द्रस्य ज्ञानदाने योग्येति दर्शयन् सोमं व्योमं कुर्वाणः विहाय उमां तदितरदेवैः समं तिरोदधे भगवान् रमाधीशः । यस्मिन्नाकाशे ब्रह्मादिभिः सह तिरोऽधात् । तमाकाशमधिवसन्तीं आशाः अधिवासयंतीं बहुशोभमानां तुहिनमहीधरतनूजां उमामाजगाम । आगत्य च तामूचिवान्- **किमेतद्यक्षमिति ॥**

तदा ते देवा अग्निमब्रुवन् । हे जातवेद एतद्यक्षं किमिति विजानीहीति । तथेत्युक्त्वा सोऽग्निस्तद् यक्षम् अभि आभिमुख्येन अद्रवद् अगमत् । तद्यक्षम् । अभिमुखगतम् अग्निं कोऽसीत्यवदत् । 'अग्निरहमस्मि जातवेदा अहमस्मि' इति अग्निरब्रवीत् । वै प्रसिद्धमेतन्नाम ममेत्यर्थः । तस्मिंस्त्वयि तादृशे त्वयि किं

वीर्यम्' इति यक्षमब्रवीत् । यदिदं पृथिव्यामस्ति सर्वमपीदं दहेयम्' इत्यग्निरब्रवीत् । तस्मै अग्नये एतद् दहेत्युक्त्वा किञ्चित् तृणं तत्पुरतो निदधौ यक्षमित्यर्थः । तत् तृणं दग्धुं सर्वजवेन सर्ववेगेनोपप्रेयाय समीपमगमत् । गत्वा तन्न शशाक दग्धुम् । सोऽग्निस्तत एव तावन्मात्रत एव, यक्षरूपमनिर्धार्य, निववृते निवृत्तवान् । निवृत्य च देवानब्रवीत् 'यदेतद्यक्षमिति एतद्विज्ञातुं नाशकम्' इति ।

॥ इति तृतीयः खण्डः ॥

**वरदतीर्थीयम्-** नन्वग्न्याद्यवगमेन अतिरोहितस्य विष्णोरिन्द्रागमने तिरोधानस्य किं कारणमित्यत आह- **तत्रेति** ॥ पृच्छति चेत् को बाध इत्यत आह- **मत्तेति** ॥ इदानीं दैत्यावेशात् इन्द्रस्य मत्तः शिवाद्ब्रह्मणश्च श्रोतुं योग्यता नास्तीत्यर्थः ।

॥ इति तृतीयः खण्डः ॥

**खण्डार्थः-** अथानन्तरं वायुं नासिक्यवायुम् । प्राग्वद्व्याख्या । आदर्दीयमाददानीत्यर्थः । तस्मात् तिरोदधे । तस्मात् प्रदेशादन्तर्हितमभूदिति वा, इन्द्रस्याधिकबुद्धित्वान्मां प्रति कोऽसीति प्रश्ने कृते असुरावेशदूषितत्वेनेदानीं मया ब्रह्मणा शिवेन च साक्षादुपदेशानर्हत्वात् तिरोदध इति वाऽर्थस्तस्मादित्यस्य । ब्रह्मादिभिः सहेति योज्यम् । स इन्द्रस्तस्मिन्नेव यक्षतिरोधानाकाशप्रदेश एव । यक्षेणोपदेशार्थं स्थापितां स्त्रियं दृष्ट्वाऽऽजगाम तत्समीपं प्राप्तवान् । सा केत्यत उक्तं- **बह्विति** ॥ हैमवतीं हिमवत्पुत्रीम् । एतद्यक्षं किमिति तां देवीमुवाच पप्रच्छेत्यर्थः ।

॥ इति तृतीयखण्डखण्डार्थः ॥

# अथ चतुर्थखण्डः

## उपनिषत्

ब्रह्मेति होवाच । ब्रह्मणो वा एतद् विजयेऽमहीयध्वमिति । ततो हैव विदाञ्चकार ब्रह्मेति ॥१॥ तस्माद् वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुः । ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥२॥ तस्माद् वा इन्द्रोऽतितरामिवान्यान् देवान् । स ह्येनन्नेदिष्ठं पस्पर्श । स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥३॥

## भाष्यम्

उमा सा सम्यगाचष्ट तस्मै विष्णुं परं पदम् ।
यस्माद् ब्रह्मा च वायुश्च शेषवीन्द्रौ शिवस्तथा ॥

सभार्या गर्विणो नाऽसन् सुरेभ्यस्तेऽधिकास्ततः ।
इन्द्रस्तु प्रथमं ब्रह्म व्यजानात्तेन तूत्तमः ॥

दक्षादिभ्यस्तथा कामस्तज्ज्ञातुं पूर्वमुक्तवान् ।
दक्षो बृहस्पतिश्चैव मनुः कामात्मजस्तथा ॥

सूर्याचन्द्रमसौ धर्मो वरुणश्चोचुरोमिति ।
नासिक्यवायुरग्निश्च प्रथमं तदपश्यताम् ॥

सर्वदेवाधिकास्तस्माद् एते देवाः प्रकीर्तिताः ।
एतेभ्यश्चेन्द्रकामौ तु ताभ्यां ब्रह्मादयोऽधिकाः ॥

एतेपामवमो वह्निः परमो विष्णुरुच्यते ।
अन्तराले स्थितास्त्वन्ये ब्रह्माद्याः पूर्वमीरिताः ॥

अग्निः पश्चाद्व्यजानात्तदिन्द्रवाक्यात्ततोऽवमः ।
तस्माद्विष्ण्वभिसम्वन्धात् पारावर्यं सुरेष्विदम् ॥

**व्यासतीर्थीयम्–** तस्माद्वा इति परामृष्टो हेतुः क इति न ज्ञायते । 'एते देवा अतितरामिवान्यान् देवान्' इत्यन्यदेवतातिशयिता देवाश्च क इत्यतस्तद्वाक्यं व्याचष्टे- **यस्मादिति ॥** अथवा तस्माद्वा एते देवा अतितरामिवान्यान्देवान् एते इत्युक्ताः के यदग्निर्योऽयमग्निर्वायुरिन्द्रस्तस्मादिति परामृष्टं हेतुमेव विशदमाह- **ते ह्येनं नेदिष्ठं पस्पृशुरिति ॥** नेदिष्ठं अतिसमीपस्थम् । स्पर्शनमेव विवृणोति- ते ह्येनत् प्रथमः प्रथमं विदाञ्चकार विदाञ्चक्रुरिति ॥

यदग्निर्वायुरिन्द्र इत्युक्तेन्द्रस्याग्न्यादिसाम्यं प्रतीयते तां परिहरति- **तस्माद्वा इन्द्र इति ॥** तद्व्याचष्टे- **इन्द्रस्त्विति ॥** तस्माद्वा एते देवा इतिवाक्यं प्रकारान्तरेण व्याचष्टे- **दक्षादिभ्य इत्यादिना ॥** ओमिति यक्षं विचार्यमेवेत्यूचुः ।

नासिक्यवायुरित्युक्तरीत्या व्याख्यानान्तरम् । ब्रह्मादीनामुक्तमप्याधिक्यं प्रसङ्गप्राप्तं पुनराह- **एतेभ्य इति ॥** यदग्निर्वायुरित्युक्त्याऽग्नेः श्रेष्ठत्वप्रतीतिं निवारयंस्तारतम्ये कः प्रथमः कोऽन्तिम इत्यत आह- **एतेषामिति ॥** पूर्वमीरिताः उत्तरकक्ष्यात्वेनेति शेषः । अग्नेः सर्वावमत्वे कारणमाह- **अग्निरिति ॥** विष्ण्वभिसम्बन्धात् विष्णुज्ञानादितारतम्याभिसम्बन्धात् ।

**वामनटीका–** 'ब्रह्मेति होवाच' इत्युत्तरखण्डार्थमाह– **उमा सा सम्यगाचष्टे-त्यादिना ॥** ब्रह्मणो वा एतद्विजये । युष्मत्स्थस्य ब्रह्मणः प्रसादादेव ह्येतेषां दैत्यादीनां विजये युष्माभिः कृते । अतस्तस्यैव एतद्विजयित्वम् । तस्मिन् सति हि यूयं लोकेषु अमहीयध्वम् । नहि युष्मच्छक्त्या ।

एते देवाः अग्निवाय्विन्द्राः । अन्यान् तत्रानादिष्टदेवान् प्रति अतितरामिव भवन्ति । गुणाधिका भवन्ति । इवशब्दस्तु ब्रह्मव्यतिरिक्तानाममितगुणाधिक्य-निवारणार्थः । सर्वेऽप्येते यथाश्रुतगुणाधिका भवन्तीत्यर्थः । तत्र हेतुमाह– **'ते हि' इति ॥** ते ह्येनत् यक्षं अतिसमीपस्थं पस्पृशुः चक्षुरादिना विषयीचक्रुः । किञ्च त एव ह्येनत् यक्षं ब्रह्मेति प्रथमतो विदाञ्चक्रुः । नच तेऽपि युगपदेव विदाञ्चक्रुः । किन्तु एकैक एवैकस्मात् प्रथमतो विदाञ्चकार इत्येकवचनार्थः ।

वाय्वादिभ्यो दक्षादिभ्यश्चेन्द्रोऽधिकः । तेभ्यः प्रथमवेत्तृत्वात् । तद्वत् कामोऽपि तेभ्योऽधिकः । ज्ञातव्यं यक्षमिति पूर्ववक्तृत्वात् । तस्मादिन्द्रकामौ प्रायः समानौ ।

अथ दक्षाद्याः सूर्यवाय्वादिभ्यः । वाय्वग्नी तु प्रथमद्रष्टारावप्येतेषां वचनमन्तरेण ज्ञानशक्तिविहीनत्वादेव तेभ्यः स्वयमवमौ । इतरेभ्यस्तूत्तमौ । एवं च ज्ञानजिज्ञासयोराधिक्यमेवोत्तमत्वकारणमिति भावः । उक्तार्थं निगमयति– **सर्वदेवाधिकास्तस्मादिति ॥** उक्तहेतोः एते दक्षाद्या अग्निपर्यन्ता देवाः मित्राश्विपर्जन्यादिभ्यो नवकोटिदेवेभ्यश्चाधिकाः प्रकीर्तिताः । एतेभ्यश्चेन्द्रकामौ अधिकौ । ताभ्यां विशेषतश्च ब्रह्मादय उत्तमाः । 'गर्विणो न्यऽसन्' इत्युक्तत्वात् । अथाप्येतत् तारतम्यं श्रुत्यन्तरेऽपि सुश्रुतमिति दर्शयति– 'एतेषामवमः' इत्यादिना । 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेणान्या देवताः (ऐ.ब्रा.१.१.)इति हि श्रुत्यन्तरम् ।

अग्नेस्तु पूर्वद्रष्टुरपीन्द्रादिवाय्वन्तेभ्योऽवरत्वे कारणमाह– **अग्निः पश्चादिति ॥** अग्निः दक्षादीनां तत्परिज्ञानतः पश्चाद् एव इन्द्रवाक्यात् तद् यक्षं ब्रह्मेति व्यजानात् । तस्मादग्निः तेभ्यः अवमः । एतेषां पारावर्यकारणं निगमयति– **तस्मादिति ॥** विष्ण्वभिसम्बन्धस्य बहुत्वाल्पत्वादिविशेषादेव ब्रह्मादिष्वेतत् पारावर्यं सिद्धं भवति ।

**प्रकाशिका–** 'ब्रह्म व्यजानत्' इत्यत्र उमामुखात्स्वयं व्यजानात्पश्चाद्देवान् प्रत्युक्तवान् । तथा कामोऽपि दक्षादिभ्य उत्तमः । यतः स कामो देवेभ्यः पूर्वमेवेन्द्रं प्रति तज्ज्ञातुमुक्तवान् । एवं च 'कर्ता कारयिता च' इति न्यायेन द्वावपि समाविति भावः । 'सर्वदेवाधिकास्तस्मात्' इत्यत्र सर्वे देवाः 'उक्तशेषाः शतस्थाः' इत्यत्र प्रोक्तदेवाः । तेभ्योऽधिका इत्यर्थः । 'एते देवा' इन्द्रादीनामाज्ञया प्राग्गतावग्निवायू ज्ञातुमिन्द्रस्योमित्यनुमतिकर्तारो दक्षाद्या वरुणपर्यन्ता देवा इत्यर्थः । न चात्र शङ्कनीयम् । इन्द्रादपि पूर्वगमनादग्निवायू इन्द्रादप्युत्तमाविति । निष्फलगमनकर्त्रोरपेक्षया सफलगमनकर्तुरिन्द्रस्योत्तम-त्वावश्यं भावात् । अस्तु तर्ह्यगन्तृभ्यो दक्षादिभ्योऽप्यनयोरुत्तमत्वमिति चेन्न । निष्फलगमनकर्त्रोरपेक्षया सफलगमनानुमन्तॄणामेव फलोपयोगित्वेनोत्तमत्वौचित्यात् । गत्वा ज्ञानदातुरिन्द्रात्, प्रथममिन्द्रगमनोत्थापकात् कामाच्च दक्षादीनामवमत्वस्य च न्यायप्राप्तत्वादुपनिषद्युक्तदेवतातारतम्यस्यैव स्पष्टीकरणादिति ज्ञेयम् ।

तस्माद्वा एते देवा अतितरामिवान्यान् देवान् इत्यत्र इवशब्देन यथाऽन्ये देवा ऋष्यादिभ्योऽतितरामतिशयेन वर्तन्त एवमेते वाय्वग्नीन्द्राख्या देवा अन्यान् देवानतितरामतिशयेन वर्तन्त एवमेते इत्युपमया तारतम्यान्तरं सूचितमिति ज्ञेयम् । एवमुत्तरत्रापि यथा दक्षादयोऽग्निवायुभ्यामभ्यधिका एवमिन्द्रो दक्षादिभ्योऽप्यतितरामतिशयेन वर्तत इति देवेष्ववान्तरतारतम्यमपि सूचितमिति ज्ञेयम् । अव्ययानामनेकार्थत्वादवधारणार्थो वा । ब्रह्मरुद्रशेषगरुडानामसुरावेशा-भावादेते देवा असुरावेशादहङ्कारकर्तृभ्य एतेभ्यो देवेभ्योऽतितरामिवातिशयेन वर्तन्त एवेत्युपनिषदोऽभिसन्धिः । एवं चोपनिषदङ्गना रमा पूर्वोत्तरपर्यालोचनायां स्वतनयपवनतनयमध्वस्याध्वानमेव स्थिरीचकार । पस्पृशुः भगवन्तं स्वहृदि स्थिरीचक्रुः । विदाञ्चकार व्यजानात् । इन्द्रः प्रथमो विदाञ्चकार । तदुपदेशेन तेऽपि विदाञ्चक्रुरिति योजना ।

**वे.विवरणम्–** ब्रह्मेति होवाच इति वाक्यमपेक्षितपूरणेन व्याचष्टे- **उत्तमेति** ॥ हेत्यस्यार्थः- **सम्यगिति** ॥ तस्माद्वा एते देवा अतितरामिवान्यान् देवान् इत्येतावदेव वाक्यम् । एते देवा इत्युक्ताः क इत्याशङ्कां परिहरन् तस्मादित्युक्तहेतुप्रदर्शनपूर्वकं व्याचष्टे- **यस्मादिति** ॥ अत्र वायुवीन्द्रशेषाणां सभार्याणां ग्रहणेन पूर्वमुमाशिवसमन्वित इत्यत्रैतेऽप्युपलक्षणीया इति ज्ञायते । ननु 'तस्माद्वा एते देवा' अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्र' इत्यग्निवाय्विन्द्राणां स्वव्यतिरिक्तदेवोत्तमत्वमुच्यते, तदयुक्तम् । तेषां ब्रह्माद्युत्तमत्वा-भावात् । नच सुरेभ्यस्तेऽधिकाः इति इन्द्राद्युत्तमत्वस्य तेषामभिहितत्वात् तद्व्यतिरिक्तदेवोत्तमत्वमेवात्रोच्यत इति वाच्यम् । इन्द्रस्य स्वव्यतिरिक्तकामोत्तम-त्वाभावेन नासिक्यवायोर्दक्षाद्युत्तमत्वाभावेनाग्नेश्च सूर्याद्युत्तमत्वाभावेन तस्याप्यनुपपत्तिरिति चेन्न । यदग्निर्वायुरिन्द्रः इत्यग्न्यादिशब्दैरिन्द्राग्निमध्यवर्तिनां कामादीनामप्युप-लक्षणया ग्रहणेनाग्र्यवरसर्वदेवाधिकत्वमेवेन्द्रकामादीनामत्र विवक्षितमिति सूचयन् अग्निवाय्विन्द्राणामधिकत्वे ते ह्येनम् इति निमित्तकथनादस्तु सर्वदेवाधिकत्वम् । न तु कामादीनां, तत्र निमित्तकथनाभावात् इत्याशङ्कापरिहारायेन्द्राद्युत्तमत्वे निमित्तकथनमुपलक्षणपरमित्याशयेनाऽह- **इन्द्रस्त्वित्यादिनाऽपश्यतामित्यत्यन्तेन** ॥ यक्षरूपं ब्रह्मेति व्यजानात् उमोपदेशेनेत्यर्थः । द्वितीयस्तुशब्दोऽवधारणार्थः ।

तथाशब्दस्तुशब्दार्थः । कामस्तु तद् ज्ञातुम् आविर्भूतयक्षस्वरूपज्ञानाय पूर्वं दक्षादिभ्य उक्तवान् । तेन स उत्तम इत्यर्थः । वरुणश्चेत्येते ओमित्यूचुः कामेन यक्षस्वरूपं ज्ञातव्यमित्युक्ते तथैव कर्तव्यमित्युक्तवन्तः । तेन त उत्तमा इत्यर्थः । तद् यक्षरूपम् । तेन तावुत्तमावित्यर्थः । इन्द्रस्तु प्रथमं ब्रह्म व्यजानात् नासिक्यवायुरग्निश्च प्रथमं तदपश्यतामित्यनेन वाय्वग्न्योः प्रथमं यक्षरूपे ब्रह्मत्वज्ञानाभावात् ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति इत्युक्तमनुपपन्नमिति शङ्का परास्ता । तथाच श्रुतौ निमित्तकथनमुपलक्षणपरमिति भावः । यद्वा, यदग्निर्वायुरिन्द्रः इत्यत्राग्न्यादिशब्दानामितरोपलक्षकत्वं कुतोऽङ्गीकर्तव्यमित्यतः ते ह्येनत् प्रथमो विदाञ्चकार इति वाक्यशेषे इन्द्रकामादीनां सर्वेषामप्युत्तमत्वे निमित्तकथनादिति भावेन तद्वाक्यं कः कथं विदाञ्चकारेति शङ्कानिरासाय व्याचष्टे- **इन्द्रस्त्वित्यादिना** ॥ अस्त्वेवमुक्तरीत्या एतेषां देवानामुत्तमत्वं, तथाऽपि तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रः, इति श्रुत्यर्थः क इत्यत आह- **सर्वेति** ॥ यस्मादुक्तरीत्या इन्द्रकामाद्या उत्तमास्तस्मादेते पूर्वोक्ताः सर्वेऽपीन्द्राद्याः अग्र्यवरसर्वदेवाधिकाः श्रुतावुपलक्षणया कीर्तिता इत्यर्थः ।

नन्वस्त्वेते देवा अग्र्यवरसर्वदेवाधिकाः । तथाऽपि किमेते परस्परं समाः, अथ तेषु कश्चिदुत्तम इत्याशङ्कापरिहाराय श्रुतौ तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् इत्यभिहितम् । तत्रेन्द्रशब्दोऽपि उपलक्षणपर इति भावेन तद् व्याचष्टे- **एतेभ्य इति** ॥ वचनविपरिणामेनाधिकावित्यनुवर्तते । पूर्वं सुरेभ्यस्तेऽधिका इति ब्रह्माद्युमान्तानां देवोत्तमत्वं यदुक्तं तत्रेन्द्रकामवद् दक्षाद्याधिक्यमात्रं किन्त्वित्यत आह- **ताभ्यामिति** ॥ भाष्ये नासिक्यवायुरग्निश्च इत्युक्त्या श्रुतौ यदग्निर्वायुरित्युक्त्या चाग्नेर्वायुसाम्यं प्रतीयते इत्याशङ्कायां पूर्वप्रसक्तानां यक्षरूपविष्णुदेवानां मध्ये कोऽवमः कः श्रेष्ठ इत्यपेक्षायां चाऽह- **एतेषामिति** ॥ उच्यते । 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः' इति श्रुतावित्यर्थः । ब्रह्माद्या इत्यादिशब्देनाग्र्यवमा अपि देवा ग्राह्याः किम् ? नेति भावेनोक्तम्- **पूर्वमीरिता इति** ॥ अग्नेः सर्वावमत्वे कारणमाह- **अग्निरिति** ॥ कामादयः सर्वे इन्द्रेण सहैवोमोपदेशेन ब्रह्मस्वरूपं ज्ञातवन्तः । अग्निस्तु

पश्चादिन्द्रवाक्यात् तद् यक्षरूपं ब्रह्मेति व्यजानात् यत इत्यर्थः । यद्वा उमोपदिष्टेनेन्द्रेण यक्षरूपब्रह्मस्वरूपे कामादिभ्य उपदिष्टे सति तद्वाक्यात् कामादयो वरुणान्ताः यक्षरूपब्रह्मस्वरूपं पूर्वं ज्ञातवन्तः । अग्निश्च पश्चात् व्यजानादित्यवम इत्यर्थः । अस्त्वेवम् । सर्वेष्वपि देवेषु परावरभावे किं कारणमित्यत आह- **तस्मादिति ॥** यस्मात् पूर्वं ब्रह्मज्ञानिनोऽधिकाः पश्चात् तज्ज्ञान्यवमः । तस्माद्विष्ण्वभिसम्बन्धाद् ज्ञानाद्विना विष्ण्वभिसम्बन्धपारावर्येण विष्णुविषयकज्ञानादिपारावर्येणेति यावत् ।

**वे.श्रुत्यर्थः–** एवमिन्द्रेण पृष्टा सा उमा एतद् यक्षं युष्मदन्तर्यामिब्रह्मेति ह सम्यगुवाच । तस्य ब्रह्मण एव एतद् एतस्मिन् विजये सति यूयममहीयध्वम् अस्माकमेवायं विजय इति अहङ्कारं कृतवन्तः । तत एवोमोपदेशेनैव स इन्द्र इदं यक्षरूपं ब्रह्मेति विदाञ्चकार ज्ञातवान् । यस्माद् ब्रह्मवायुशेषगरुडरुद्राः सभार्याः स्वान्तर्यामिणो ब्रह्मणो विजयेऽस्माकमेवायं विजय इति गर्विणो नासन् तस्माद् वा तस्मादेव एते देवा अन्यान् देवान् इन्द्रादीन् अपेक्ष्यातितरामिव अतिशयिता एव । इन्द्रादीनां गर्वित्वादिति भावः । यद्वा, तस्माद् यद् ये अग्निर्वायुरिन्द्रश्चेत्येते देवा अन्यान् देवान् अग्न्यवरसर्वदेवानपेक्ष्यातितरामिव अधिका एवेत्यर्थः । अत्रेन्द्रादिशब्दैः कामदक्षादयोऽपि ग्राह्याः । तस्मादित्युक्तं हेतुं विशदयति- **ते हीति ॥** हि यस्मात् ते अग्निवाय्विन्द्रा देवा एनत् यक्षरूपं भगवन्तं नेदिष्ठं समीपस्थं पस्पृशुः स्पृष्टवन्तः । तस्मादिति पूर्वेण सम्बन्धः ॥१॥

तदेव विवृणोति- **ते हीति ॥** ते प्रागुक्ता देवा एनद् यक्षरूपं ब्रह्म प्रथमः प्रथमं विदाञ्चकार विदाञ्चक्रुः ज्ञातवन्तः । किमिति? ब्रह्मेति । अत्रेन्द्र उमोपदेशेन प्रथमं ब्रह्म व्यजानात् । वाय्वग्नी तु प्रथमं यक्षरूपं अपश्यतामिति विवेकः । उपलक्षणमेतत् । दक्षादीनामुत्तमत्वेऽपि भाष्योक्तं निमित्तं ग्राह्यम् ॥२॥

इन्द्राद्या अपि देवाः किं परस्परं समाः? नेति भावेनाऽऽह- **तस्माद्वा इति ॥** इन्द्रशब्देनात्र कामोऽप्युपलक्षणीयः । अन्यान् देवान् दक्षादीन् । इन्द्रस्योत्तमत्वे निमित्तमाह- **स हीति ॥** तदेव विवृणोति- **सहीति ॥** उमोपदेशेन भगवत्स्वरूपं प्रथमत इन्द्रो व्यजानात् । पश्चादिन्द्रोपदेशेनेतरेषां भगवज्ज्ञानमिति भावः ॥३॥

**नृसिंहप्रकाशिका–** ब्रह्मणो वा एतद्विजये ब्रह्मैव भवत्सु नियामकत्वेन स्थित्वा भवदभीष्टसिद्धये दैत्यान् जिगाय । ब्रह्मणो वा एतद्विजये यूयम महीयध्वम् । अस्माकमेवायं विजयोऽस्माकमेवायं महिमेत्यहङ्कारयुक्ता अभवन् । ततः उमोपदेशादिन्द्रः इदं सर्वान्तर्यामित्वं सर्वस्वातन्त्र्याद्यनन्तगुणपूर्णं विष्ण्वाख्यं परं ब्रह्मेति विदाञ्चकार हैव । सम्यक् गतवानभूत् ह । तस्माद्ध असुरावेशाभावेन गर्वाभावात् एते देवाः ब्रह्मवायुगरुडशेषरुद्राः सभार्याः । अन्यान् देवान् इन्द्राादीनपेक्ष्य अतितरामिव । अत्युत्कृष्टा एव भवन्ति । अनुदेवानाह- **यदिति ॥** ये हि यस्माच्च एतद् ब्रह्म नेदिष्ठं सर्वान्तर्यामित्वेन समीपस्था ते ब्रह्माद्याः पस्पृशुः । उमैव समं विवृणोति- **तेहीति ॥** ते हि ब्रह्माद्याः एतत् पूर्णं वस्तु प्रथमः प्रथमं परं ब्रह्मेति विदाञ्चकार । विदाञ्चक्रुः व्यजानन् । इन्द्राद्यपेक्षया ज्ञानसम्बन्धातिशयात् ब्रह्माद्या अत्युत्कृष्टा इत्यर्थः । इन्द्रस्याग्र्यादिसहोक्त्या अग्र्यादिसाम्यप्रतीतिं निवारयन् अग्र्याद्युत्तमत्वमाह- **तस्मादिति ॥** पूर्ववाक्यवदिदं वाक्यं योजनीयम् । अत्रान्यदेवतासु अहङ्कारिक-प्राणबृहस्पत्याद्याः इन्द्रियाभिमानिषु अग्र्यन्ताः । एतेष्वप्यवान्तरतारतम्यं एतदन्यदेवतातारतम्यं च विशेषप्रमाणादवगन्तव्यम् ॥१-३॥

**स.भाष्यविवृतिः–** एवमिन्द्रेण पृष्टा सामर्थ्यं स्मृत्या समगृह्णात् समीरगुरुः 'इत्यत्राख्यायिकां वच्मि' इत्यारभ्य योग्या उमा एतद्यक्षं ब्रह्मेति विष्णुः अन्तर्यामीत्युवाच । ब्रह्मणः अन्तर्यामिणो तस्मिन्नसुरविजये कृते मध्ये यूयमहीयध्वम् । अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति । तत एव उमोपदेशेनैवेन्द्रः यक्षस्वरूपं हृदयस्थितं विजेतृब्रह्मेति विदाञ्चकार ह । यस्मादिन्द्रो नासिक्यवायुरग्निश्च गर्विणः आसन् । यस्माच्च ब्रह्मवायुशेषवीन्द्रशिवाः सभार्याः गर्विणो नाभूवन् । ततः अन्यान् देवान् इन्द्रादीन् अपेक्ष्य एते पूर्वोक्ताः अतितरामिव अधिका एव हि यस्मात् ते ब्रह्मवायुशेषवीन्द्रशिवाः सभार्याः एनत् नेदिष्ठं समीपस्थं यक्षरूपं पस्पृशुः प्राप्तवन्तः । ते ह्येनद्यक्षरूपं प्रथमः प्रथमं विदाञ्चकार विदाञ्चक्रुः । तस्मात् ते इन्द्राग्निनासिक्यवायुप्रभृतिभ्यः ब्रह्मवायुप्रभृतयः श्रेष्ठा एव ।

यद्वा येऽग्निर्वायुरिन्द्राश्च ते देवाः अग्न्यपेक्षया अवरान् उषास्वाहापर्जन्य-मित्रान् तत्समान् तदन्तरालिकांश्चापेक्ष्यातितरामिव अधिका एवेत्यर्थः । अत्र इन्द्रवाय्वग्निशब्दैरेतत्समा एतदान्तरालिकाश्च ग्राह्याः । तत्रेन्द्रसमः कामः । प्रवहस्य तु समो नास्ति । अग्नेस्तु समो भृगुः । प्रसूतिश्चाग्निसमा । अनिरुद्ध-स्वायम्भुवबृहस्पतिदक्षाः शची रतिश्च अहङ्कारिकप्राणश्च प्रवहेन्द्रादयोऽन्तरालिकाः नारदवरुणचन्द्रसूर्यधर्मशतरूपाः अग्निबृहस्पतयोरान्तरालिकाः । तस्मादित्युक्तं हेतुं विशदयति- **ते हीति** ॥ हि यस्मात् अग्निप्रवहवाय्विन्द्राः देवाः एनत् यक्षरूपं भगवन्तं नेदिष्ठं समीपस्थं पस्पृशुः अस्पृशन् । तस्मात् अतितरामेव तदेव विवृणोति- **तेहीति** ॥ ते अग्निवाय्विन्द्राः तत्समाः तदान्तरालिकाश्च एनत् यक्षरूपं ब्रह्म प्रथमतः प्रथमं ब्रह्म विदाञ्चकार विदाञ्चक्रुः । अत्र किं इन्द्राद्याः समाः? नेति प्रतिपादयाञ्चक्रे- **तस्माद्वा इति** ॥ अत्र इन्द्रशब्देन कामः उपलक्षणीयः । अहङ्कारिकप्राणानिरुद्धस्वायम्भुवमनुबृहस्पतिदक्षशचीरतिप्रवह-शतरुपाधर्मसूर्यचन्द्रवरुणनारदाग्निभृगुप्रसूतीरपेक्ष्य अतितरामिवाधिका एव । इन्द्रस्योत्तमत्वे निमित्तमभ्यधात्- **स हीति** ॥ तदेव विवृणोत्- **स हीति** ॥ उमोपदेशेन भगवत्स्वरूपं प्रथमतः इन्द्रो व्यजानात् । इन्द्रपदोपलक्षितकामस्य यक्षस्वरूपज्ञानाय अहङ्कारिकप्राणं तथा अनिरुद्धस्वायम्भुवमनुबृहस्पतिदक्षशची-रतिश्च प्रवहशतरुपाधर्मसूर्यसोमवरुणान् अचूचुरदत् । ते च ओमित्यङ्गीकार्षुः अत एतेभ्यः उत्तमः कामः । तदेतदभ्यधाद्भाष्यकारः । 'उमा सा सम्यगाचष्ट' इत्यारभ्य 'पारावर्यं सुरेष्विदम्' इत्यन्तेन । एतेषामवमो वह्निः परमो विष्णुरुच्यते इत्यनेन अग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणो अग्निः सर्वा देवता विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्ययजमानो वरुद्धे पुरोळाशे न वै देवा अमुष्मिन् लोके आर्ध्नु चरुण अस्मिन् यः कामयेत अमुष्मिन् लोके रुध्नुयामिति स पुरोळाशं कुर्वीत अमुष्मिन्नेव लोकरुध्नुयामिति स चरुं कुर्वीत अघृतं विष्णोस्तण्डुलास्तस्मात् चरुः कार्योऽस्मिन्नेव लोकरुध्नोतीति यजुर्वाक्यसन्दर्भः । अग्निर्वै देवानामवमो विष्णुः परमः तदन्तरेण सर्वा अन्या देवताः । अग्नावैष्णवं पुरोळाशं निर्वपन्ति दीक्षणीयमेकादशकपालं सर्वाभ्य एवैनं तद्देवताभ्योऽनन्तरायं न्निर्वपन्ति अग्निर्वै

सर्वा देवताः । विष्णुः सर्वा देवताः । एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च । तद्यदाग्नावैष्णवं पुरोळाशं निर्वपन्त्यन्तत एव तद्देवानृध्नुवन्ति । तदाहुः । यदेकादशकपालः पुरोळाशो द्वावग्नाविष्णू कैनयोस्तत्र क्लृप्तिः का विभक्तिरिति । अष्टाकपाल आग्नेयः । अष्टाक्षरा वै गायत्री । गायत्रमग्नेश्छन्दः । त्रिकपालो वैष्णवः । त्रिर्हीदं विष्णुर्व्यक्रमत । सेनयोस्तत्र क्लृप्तिः सा विभक्तिः । घृते चरुं निर्वपेत योऽप्रतिष्ठितो मन्येत,। अस्यां वाव स न प्रतितिष्ठति यो न प्रतितिष्ठति । तद् यद् घृतं तत् स्त्रियै पयः । ये तण्डुलास्ते पुंसः । तन्मिथुनम् । मिथुनेनैवैनं तत् प्रजया पशुभिः प्रजनयति । प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद । (ऐतरेयब्राह्मण-१खं,१अ) इति ब्राह्मणवाक्यसन्दर्भश्च । अमुमर्थमवाजीगमतामित्यसुसूचत् ।

**वरदतीर्थीयम्-** नन्वेवं चेदुमा किमर्थं न तिरोहिता कृतेत्यत आह- **एषैवेति ॥** तस्माद्वा एते देवा अतितरामिवान्यान् देवान् इति वाक्यमावृत्या योजनीयम् । प्रमाणवाक्ये अस्य वाक्यस्य ब्रह्मादिविषयतयापि व्याख्यातत्वात् । यदग्निर्वायुरिन्द्र इत्यत्र इन्द्रस्य यदग्न्यादिसाम्यं प्रतीतं तन्निराकरणार्थमुच्यते तस्माद्वा इन्द्रोतितरामिवान्यान् देवान् इत्यादि । तद्व्याचष्टे- **इन्द्र इति ॥** तथाकामोपि इन्द्रवत् दक्षादिभ्य उत्तमः । कामस्यापि दक्षादिभ्य उत्तमत्वे निमित्तमाह- **स इति ॥** तस्माद्वा एते देवा अतितरामिवान्यान् देवान् इति वाक्यं प्रकारान्तरेण व्याचष्टे- **दक्ष इत्यादिना ॥** एते दक्षादयः यदा देवाः यक्षरूपो विष्णुः विचार्य एवेत्यूचुरिति यतः अतो अन्येभ्यो देवेभ्यः उत्तमा इत्यर्थः । अग्निवायोरितरदेवोत्तमत्वे निमित्तमाह नासिक्येति । ब्रह्मादीनामितरदेवाधिक्यमुक्तं स्पष्टयति । एतेभ्यः इति । उक्ततारतम्ये कः प्रथमः को वावसान इत्यत आह- **एतेषामिति ॥** अग्नेरवरत्वे कारणमाह अग्निरिति । अग्निः पश्चाद्व्यजानादिन्द्रवाक्यात्ततोऽवमः ।

**खण्डार्थः–** इन्द्रेण पृष्टा सा तद्यक्षं ब्रह्मेति होवाच । हेति निश्चयमाह । एतद् एतस्य देवेष्वनुप्रविष्टस्य ब्रह्मणो विजये तद्विजयनिमित्तममहीयध्वं महिमवन्तोऽभवत,न त्वात्मनो विजयनिमित्तं गर्विणो भवत । वै निश्चयमेतत् ।

इति चोवाच ह वै इत्यन्वयः । एवमुमयोपदिष्ट इन्द्रः किं चकारेत्यत आह ब्रह्मा शिवं प्रति- **तत इति** ॥ ततो हैव देव्युपदेशादेव तद्यक्षम् इन्द्रः ब्रह्मेति दैत्यविजयोऽस्मदनुप्रविष्टब्रह्मकृत इत्यादि विदाञ्चकार ज्ञातवान् । तस्माद् वै तस्मादेव गर्वशून्यत्वादेव एते देवाः ब्रह्मवायुशेषवीन्द्रशिवाः सभार्या अन्यान् देवानतितरान्, अन्यदेवेभ्योऽधिका इत्येकोऽर्थः । इवशब्दस्तु गर्वाभावादाधिक्यम् अविद्यमानं देवानां नेदानीमेव प्राप्तं, किं त्वनादिसिद्धमेव, तदिदानीं व्यक्तमभूदित्यभिप्रायः । अन्योऽर्थस्तु तस्मात् वै यक्षतया प्रादुर्भूतस्य स्वरूपं विचार्यमिति प्रथममुक्तत्वादेव, एते देवाः कामदक्षबृहस्पतिस्वायम्भुवमन्वनिरुद्ध-सूर्यचन्द्रधर्मवरुणा अन्यान् देवानतितरामिवेति । प्रागिवास्यार्थः । तत्रापि दक्षादिभ्यः प्राग् विचार्यं यक्षमित्युक्तत्वात् । कामस्तेभ्योऽधिक इति ज्ञेयम् । तृतीयोऽर्थस्तु- तस्मात् वै एते देवाः । वायुरत्र नासिक्यो ग्राह्यः । कुत एत अधिका यक्षरूपं ब्रह्म नेदिष्ठं समीपस्थं, कालतः सामीप्यमत्र ध्येयं, इतरेभ्यः पूर्वकाल एव पस्पृशुः, स्पृश आमर्शने, परामर्शं कृतवन्त इत्यर्थः । परामर्श-श्चाग्निवाय्वोर्यक्षदर्शनमात्रम्, इन्द्रस्य तु यक्षस्य ब्रह्मत्वादिना ज्ञानं ध्येयम् ॥१॥

तद्व्यनक्ति- **ते हीति** ॥ अग्निवाय्विन्द्राः प्रथमः प्रथमं विदाञ्चकार विदाञ्चक्रुः । वेदनं चेन्द्रस्य देव्युपदेशात्, अन्ययोस्तु इन्द्रोपदेशादिति भावेनेन्द्रज्ञानोदय-प्रकारमाह- **तस्माद्वा इति** ॥ तस्मादित्युक्तं हेतुं व्यनक्ति- **स ह्येनदिति** ॥ एनत् देवम् । तद्वाक्यार्थमेव व्यक्तमाह- **स ह्येनत् प्रथम इति प्रथममित्यर्थः** ॥२-३॥

### उपनिषत्

**तस्यैष आदेशो यदेतद् विद्युतोऽभिव्यद्युतदा३ इति । न्यमीमिषदा३ इत्यधिदैवतम् ॥४॥ अथाध्यात्मम् । यदेतद् गच्छतीव च मनोऽनेन वै तदुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥५॥**

### भाष्यम्

व्यद्योतयद्विद्युदादीन् कपिलाख्यस्तु यो हरिः ।<br>
अक्ष्णोर्निमेषणं कृत्वा यः शेते क्षीरसागरे ॥

**स एवैकः परं ब्रह्मेत्येव तस्योपदेशनम् ।**
**अधिदैवे तथाऽध्यात्मे यं मनो गच्छतीव च ॥**

**सम्यङ् न गच्छति क्वापि मनो येन स्मरत्यपि ।**
**सोऽनिरुद्धाख्य ईशेशः परं ब्रह्मेति कीर्त्यते ॥**

**व्यासतीर्थीयम्–** अधिदैवमध्यात्मं चोपास्यं रूपमुपदिशति- **तस्यैष इत्यादिना ॥** अप्रतीतेस्तद्वाक्यजातं व्याचष्टे- **व्यद्योतयदित्यादिना ॥** रूपाणां स्थानभेदकृतो भेदो न मन्तव्य इति भावेनोक्तम्- **स एवैक इति ॥** येन प्रेरितं मनो विषयान् स्मरति ॥४-५॥

**वामनटीका–** यदेतत् प्रादुर्भूतं यक्षं तत् सामान्यत एव हि पूर्वोपदिष्टमथ वस्त्वन्तरव्यावृत्तये विशेषधर्मैः सहोपदिशति सा देवी 'तस्यैषः' इत्यादिना । अथ भगवांस्तदभिप्रायं द्योतयति– **'व्यद्योतयत्' इत्यादिना ॥** इत्येव तस्योपदेशनम् इत्येतद् वचनं 'तस्यैष आदेशः' इत्यस्य व्याख्यानम् । तस्य ब्रह्मणः एष आदेशः विशेषधर्मोपदेश इत्यर्थः ॥ ४–५ ॥

**वे.विवरणम्–** 'तस्यैष आदेश' इत्यादि 'इत्यधिदैवतम्' इत्यन्तं वाक्यमप्रतीतेर्व्याचष्टे- **व्यद्योतयदित्यादिनाऽधिदैव इत्यन्तेन ॥** श्रुतौ विद्युच्छब्द उपलक्षक इति भावेन विद्युदादीनित्युक्तम् । अभिव्यद्युतदित्यस्यार्थः- **व्यद्योतयदिति ॥** कपिलाख्य इत्यनेन यदेतदित्युक्तैतच्छब्दार्थ उक्तः । न्यमीमिषदित्यत्रापि यच्छब्दोऽनुवर्तनीय इति भावेन तस्यार्थमाह- **अक्ष्णोरिति ॥** श्रुतौ यच्छब्दस्य तच्छब्दाभावेनानन्वयशङ्कां तदध्याहारेण परिहरन् अभिव्यद्युतदा इत्यत्र न्यमीमिषदा इत्यत्र चोक्तस्य आ इत्यस्यार्थमाह- **स एवेति ॥** स्थानभेदेन भेदो न शङ्कनीय इति भावेनोक्तम्- **एक इति ॥** अथाध्यात्मम् इत्यारभ्य तद्ध इत्यन्तं वाक्यं व्याचष्टे- **तथाऽध्यात्म इत्यादिना ॥** यम् अनिरुद्धाख्यम् । उत्तरत्रानुवादात् । तेन श्रुतावेतच्छब्दार्थ उक्तः । इवशब्दार्थं व्यनक्ति- **सम्यगिति ॥**

**वे.श्रुत्यर्थः–** तस्य भगवत अधिदैवमध्यात्मं चोपास्यरूपमुपदिशति- **तस्येति ॥** अधिदैवतं तस्य भगवत एष वक्ष्यमाण आदेश उपदेश इति सम्बन्धः । एतत्

प्रसिद्धं यत् कपिलाख्यं रूपं विद्युतो विद्युदादिप्रकाशान् आ समन्तात् अभिव्यद्युतद् व्यद्योतयत् प्राकाशयत् । स एव आः पूर्णत्वादाकारवाच्यं परं ब्रह्मेति तस्याऽदेश इत्यर्थः । यदेतदित्यत्रापि सम्बध्यते । यदेतत् कपिलाख्यं आ समन्तात् न्यमीमिषत् निमीलिताक्षमभवत् । अक्ष्णोर्निमेषणं कृत्वा क्षीरसागरे शेते स एव आः पूर्णत्वादाकारवाच्यं परं ब्रह्मेति तस्याऽदेश इत्यर्थः । अथ अधिदैवमुपास्यरूपक्रथनानन्तरमध्यात्मं तस्याऽदेशप्रकार उच्यत इत्यर्थः । यदेतत् प्रसिद्धम् अनिरुद्धाख्यं रूपं प्रति अभीक्ष्णं निरन्तरं सङ्कल्पः सङ्कल्पकं मनो गच्छतीव क्वापि सम्यक् न गच्छति । चशब्दो वक्ष्यमाणविशेषणसमुच्चये । अनेनैवानिरुद्धाख्येन भगवता प्रेरितं तन्मन उपस्मरति स्मरणसाधनं भवति । तद्ध तदेव । आ इत्यनुवर्तते आः परं ब्रह्मेत्यर्थः ॥४-५॥

**नृसिंहप्रकाशिका–** अधिदैवमध्यात्मं चोपास्यरूपमुपदिशति- **तस्येति** ॥ विद्युतः बहुवचनमाद्यर्थे विद्युदादीन् । यत् रूपं आसमन्तात् व्यद्योतयत् । प्रकाशकशक्तिं दत्वा प्रकाशयामास । इति एवं धर्मिकम् । तं चैतत् कपिलाख्यं रूपमेव । आः पूर्णं मूलरूपं सत् । अ न्यमीमिषत् । अक्ष्णोनिर्मीलनं कृत्वा समन्तात् क्षीरसागरे शेते । कपिलाख्यावताररूपं मूलरूपं चेत्युभयं एकमेवेत्यर्थः । इत्यधिदैवं तमुपास्यं निरूपितम् । अथाध्यात्ममुपास्यमुपदिश्यते । अभीक्ष्णं सङ्कल्पः सङ्कल्पकम् । यदेतत् मनः विष्ण्वादिविषयं गच्छतीव अल्पं स्मरति । सम्यक् च न स्मरति । तदेनत् । मनः । अनेनानिरुद्धाख्यपरमात्मना प्रेरितं सत् । विष्ण्वादिविषयं उपस्मरति वै । तत् ब्रह्म गुणैस्ततत्वात् ॥४-५॥

**स.भाष्यविवृतिः–** एवमाख्यायिकां चतुर्मुखः पञ्चमुखं प्रति अधिदैवमाध्यात्मं चोपास्यं रूपमुपादिशत् । **तस्यैषेत्यादि** । अधिदैवतं तस्य भगवतः एष वक्षमाणः आदेश उपदेश इति सम्बन्धः । भावे घञ् । एतत् तत् प्रसिद्धं कपिलाख्यं रूपं विद्युतः प्रकाशात् आसमन्तात् । व्यद्युतत् प्राकाशयत् । स एव आः पूर्णत्वादाकारवाच्यं परं ब्रह्म । आ आः इति च्छेदः । यदेतद्ब्रह्म । कपिलाख्यं आसमन्तात् आः पूर्णं न्यमीमिषत् स्वार्थे णिच् । आ आकारवाच्यं परं ब्रह्मेत्यधिदैवतं तस्यादेश इत्यन्वयः । विद्युदादिप्रकाशस्य भगवतः कपिलस्य

क्षीरसागरमधिशयानस्य न्यमीमिषत् स्वार्थे णिच् । अक्ष्णोर्निमेषणं कृत्वा क्षीरसागरे अशेत । तदेव आ आकारवाच्यं परं ब्रह्मेत्यधिदैवतं तस्यादेश इत्यन्वयः । विद्युदादिप्रकाशस्य भगवतः कपिलस्य क्षीरसागरमधिशयानस्य च कपिलस्य स्थानभेदेन भेदमाशङ्किष्ठ इति उभयोः पूर्णत्वविधानम् । अथ अधिदैवमुपास्य रूपकथनानन्तरं अध्यात्मं तस्य एष आदेश अभीक्ष्णं सङ्कल्पकं यदेतन्मनः विष्ण्वादिविषयं गच्छतीव सम्यङ् न गच्छति । येन अनिरुद्धाख्येन भगवता प्रेरितं मनः एनत् ब्रह्म स्वरूपं उपस्मरति । तदनिरुद्धाख्यं रूपमेव आ पूर्णं तदेवानिरुद्धाख्यं रूपं तद्वनं नाम ततत्वात् तत्, वननीयत्वात् वनम् इत्यनुवर्तते । तद्ब्रह्म एतदुभयनामधेयाभिधेयमिति भावः ।

**वरदतीर्थीयम्-** इदानीमधिदैवमध्यात्मं चोपासितव्यं ब्रह्मरूपमुपदिश्यते । तस्यैषआदेश इत्यादि । तद्व्याचष्टे- **व्यद्योतयदिति ॥** नचैवं स्थानभेदेन तस्मिन्भेदः शङ्कनीय इत्याह- **स इति ॥**

**खण्डार्थः–** अधिदैवतमध्यात्मं चोपास्यरूपमुपदिशाति- **तस्यैष इत्यादिना ॥** तस्य ब्रह्मणः एष आदेशः उपदेशः । यदेतत् कपिलाख्यं परं विद्युतः, बहुवचनमाद्यर्थे, उपलक्षणं वा, विद्युदादीन् तेजोरूपानर्थान् आ समन्तात् व्यद्युतत् व्यद्योतयद् आदीपयदिति । आ न्यमीमिषत् सम्यक् न्यमीलयत् । आः पूर्णं ब्रह्माक्षिणी निमील्य क्षीरसागरे शेत इति यावत् । 'आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात् कोपपीडयोः' इत्यव्ययवर्गे अमरोक्त्या प्रगह्य सञ्ज्ञकस्य आ इति निपातस्य च सत्वेन भाष्ये न्यमीमिषदा इत्यत्र प्रगृह्याकारस्य सन्ध्यभावेन आ समन्तादित्येकमर्थमुक्त्वा आः इति पदविभागमाश्रित्य आः पूर्णमित्यर्थ उक्तः । इत्येष आदेशः अधिदैवे स्थितस्य तस्येति । इतिशब्दद्वयस्य पूर्वेणान्वयः । अथेत्यर्थान्तरे । अध्यात्मं देहे, तस्योपदेश उच्यते इत्यर्थः । यदेतन्मनोऽनेनैव प्रेरितं सद् गच्छतीव च सम्यङ् न गच्छति । साकल्येन वस्तु न विषयीकरोति । अनेनैवानिरुद्धाख्येन हरिणा तद् विषयजातम् उपस्मरति । कीदृशं मन इत्यत उक्तम्- **अभीक्ष्णं सङ्कल्प इति ॥** भृशमनेकार्थान् सङ्कल्पयतीति सङ्कल्पः, सङ्कल्पकमित्यर्थः । लिङ्गव्यत्ययश्छान्दसः, शब्दस्वभावाद्वा । अभीक्ष्णं नित्यं भृशं सङ्कल्पश्च भवति। तस्यानिरुद्धस्य हरेरेष उपदेश इत्यर्थः ॥४-५॥

## उपनिषत्

**तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम् ।**
**स य एतदेवं वेदाभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥ ६ ॥**

## भाष्यम्

**स विष्णुस्तद्वनं नाम ततत्वाद्वननीयतः ।**
**एवमेनं तु यो वेद भवेत्सर्वैरपेक्षितः ॥**

**व्यासतीर्थीयम्-** वननीयतः भजनीयत्वात् । तद्वनमित्युपासकस्य फलमाह- **स य एतदिति** ॥ तद्व्याचष्टे- **एवमिति** ॥६॥ भगवानादौ निमीलिताक्षोऽभवदिति कुत इत्यत आह- **स इति** ॥ य एको गुणेभ्यः परो विशेषः पुरातनः पुरुषः अग्रे निशारूपे प्रलयकाले कारणेषु सुप्तशक्तिषु जगदीश्वरे आत्मनि निधाय निर्मीलितात्मा आत्मनि स्वस्मिन्नेवासीत् सोऽयं किलेति सम्बन्धः । न्यमीमिषदा इत्यत्राकारस्य समन्तादित्यर्थ उक्तः ।

**वामनटीका–** 'स य एतदेवं वेद' इत्यस्यार्थमाह– **एवमेनं तु यो वेदेति** ॥

**वे.विवरणम्-** स्मरति स्मरणसाधनं भवति । चापिशब्दावितरेतरसमुच्चये । तद्धेत्यस्यापेक्षितस्य आ इत्यस्यानुवृत्त्यर्थमाह- **स इति** ॥ तद्धेत्यस्य तद्वनं नामेत्युत्तरत्राप्यन्वयमभिप्रेत्य सिद्धार्थत्वप्रतीतिनिरासाय व्याचष्टे- **स विष्णुरिति** ॥ ततत्वात् तत् । वननीयत्वतो वनमित्यर्थः । य एतदेवं वेद इति फलवाक्यं व्याचष्टे- **एवमिति** ॥

**वे.श्रुत्यर्थः–** अनिरुद्धाख्यविष्णोर्नामान्तरमाह- **तद्ध तद्वनमिति** ॥ तदनिरुद्धाख्यं भगवद्रूपं तद्वनं नाम ततत्वात् तत्, वननीयत्वाद् वनमिति तद्वनशब्दाभिधेयमित्यर्थः । किं तत इत्यत आह- **तद्वनमित्युपासितव्यमिति** ॥ एवमुपासकस्य फलमाह- **य इति** ॥ योऽधिकारी एतदनिरुद्धाख्यं भगवद्रूपम् एवं तद्वनमिति वेदोपास्ते,अथोपासनानन्तरम् एनमुपासकं सर्वाणि भूतानि संवाञ्छन्ति । मुक्त्यादावपि सर्वैरपेक्षितो भवेदित्यर्थः ॥६॥

**नृसिंहप्रकाशिका–** श्रीब्रह्मादिभजनीयत्वाच्च तद्वनं नाम । तस्मात् प्रवृत्तिनिमित्तज्ञानपूर्वकं ब्रह्म । तद्वनमित्युपासितव्यम् । तद्वनमित्युपासकस्य फलमाह- **स इति ॥** स प्रसिद्धो यः एतत् ब्रह्म एवं तद्वनमिति वेद । उपास्ते । एवं सर्वाणि भूतानि । अभिसंवाञ्छन्ति । तद्वनमित्युपासकस्य फलमाह- **स इति ॥** सः प्रसिद्धो यः एतत् ब्रह्म एवं तद्वनमिति वेद । उपास्ते । एवं सर्वाणि भूतानि । अभिसङ्गच्छन्ति ॥६॥

**वरदतीर्थीयम्-** इदानीं तस्योपासने मन्त्र उच्यते तद्ध तद्वनं नामेति तद्वाचष्टे **स विष्णुरिति ॥** विष्णुस्तद्वनमिति यो जानाति तस्य फलमुच्यते स य एतदेवं वेदेति । तस्यार्थ **एवमेनमिति ।**

**खण्डार्थः–** सङ्कल्पश्च- **तद्धेति** ॥ तद्ब्रह्म तद्वनंनाम ततत्वाद्व्याप्तत्वाद्वन-नीयत्वाद्भजनीयत्वात् तद्वनमिति नामवत्, तनोतेस्त्यजितनिभ्यो डतिरिति डतिप्रत्ययः, वनतेरकारः । तच्च तद्वनं चेति तद्वनमिति, हेति प्रसिद्धम् ॥ तद्वनमित्युपासकस्य फलमाह- **स य इति ॥** सः प्रसिद्धोऽधिकारी । एतद् ब्रह्म एवं तद्वनमित्येवं रूपेण वेद । एनं तद्वनत्वज्ञानिनं सर्वाणि भूतान्यभिवाञ्छन्ति, सर्वापेक्षितो भवतीत्यर्थः ॥६॥

## उपनिषत्

**उपनिषदं भो ब्रूहीति । उक्ता त उपनिषत् । ब्राह्मीं वाव त उपनिषदमब्रूमेति । तस्यै तपो दमः कर्मेति प्रतिष्ठा । वेदाः सर्वाङ्गानि सत्यमायतनम् । यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥७॥**

॥ इति चतुर्थः खण्डः ॥

॥ इति तलवकारोपनिषत् ॥

## भाष्यम्

एतत् श्रुत्वा हरोऽपृच्छद् ब्रह्माणं पुनरेव तु ।
विद्याकारं मम ब्रूहीत्युक्तो ब्रह्माऽऽह तं पुनः ॥
विद्यावेद्यं तव प्रोक्तमास्थानं ते वदाम्यहम् ।
तपोदमस्वधर्मेषु ये स्थितास्तेषु तिष्ठति ॥
'विद्या स्थानानि तस्यास्तु वेदा अङ्गानि निर्णयः ।
वेदैतामेवमखिलां यो विष्णौ प्रतितिष्ठति '। इत्यादि ब्रह्मसारे ॥
विद्युतः सूर्यादिप्रकाशान् । आ समन्ताद्व्यद्युतत्प्राकाशयत् ।
'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति वचनात् ॥
'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' । इति च ।
न्यमीमिषदा आ समन्तान्निमीलिताक्षमभवत् ।
'स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि ।
अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मा निशि सुप्तशक्तिषु '

इति वचनात् । पूर्णत्वाच्च आः । अभीक्ष्णं सङ्कल्प इति मनसो विशेषणम् । सङ्कल्पकमित्यर्थः । स प्रतिष्ठां सायतनामुपनिषदं ब्रूहीत्युक्ते सम्यगेव मयोपनिपत्स्वरूपमुक्तम् । तत्र वक्तव्यं नास्ति । तपो दमः कर्म च विद्यायाः प्रतिष्ठा । तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थः । सत्यमिति मीमांसा -

'निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् ।
श्रुतिस्मृत्युदितं सर्वं व्यस्तं मीमांसयैतया ।
सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चयः' इति शब्दनिर्णये ॥
'ऋग्यजुस्सामाथर्वाख्याः पञ्चरात्रं च भारतम् ।
मूलरामायणं चैव पुराणं भगवत्परम् ॥
वेदा इत्युच्यते सद्भिः शिक्षाद्याः स्मृतयस्तथा ।
अङ्गानि सत्यं मीमांसा तद् विद्यायतनं त्रयम् ' इति विद्यानिर्णये ॥

**व्यासतीर्थीयम्–** उपनिषद्विद्याया उपदिश्यमानत्वात् 'उपनिषदं भो ब्रूहि' इति प्रश्नस्य 'उक्ता त उपनिषत्' इत्यादिपरिहारस्य चायुक्तत्वं प्रतीयतेऽतस्तात्पर्यं व्यञ्जयन् व्याचष्टे- **एतदित्यादिना ॥** विद्या क्रियते निरूप्यते येन प्रतिपाद्यभेदनेति । प्रतिपाद्यं पृच्छसि किं वोत्पन्नायास्तस्या अवस्थानकारणानि उत वा तस्याः कारणानीत्याशयवान् ब्रह्माऽऽह- **उक्ता त इत्यादिना ॥** तद्व्याचष्टे- **विद्यावेद्यमिति ॥** कानि विद्यास्थानानि ? इत्यतस्तस्याः वेदाः षडङ्गानि निर्णयः कारणानीति योजना । सत्यमित्यस्य निर्णय इति व्याख्यानम् । एतदुपनिषद्वेत्तुः फलमाह- **यो वा एतामिति ॥** स्वर्गे स्वरूपभूतरमणज्ञानवति । लोके प्रकाशरूपे ज्येये श्रेष्ठे प्रतितिष्ठति । यत्प्रसिद्धस्वर्गरूपफलं प्रतीयते तत् अनन्तफलब्रह्मविद्याभ्यासिना-मनुपपन्नमतस्तद्व्याचष्टे- **वेदेति ॥** प्रमाणेन व्याख्यातमपि 'व्यद्युतदा' इत्यादि स्ववाक्येन विशदयति- **विद्युत इति ॥** सूर्यादिप्रकाशो भगवदधीन इत्युक्तं तत्स्मृतिश्रुत्युदाहरणेन समर्थयते- **यदिति ॥** भगवानादौ निमीलिताक्षोऽभवदिति कुत इत्यत आह- **स इति ॥** य एको गुणेभ्यः परो विशेषः पुरातनः पुरुषः अग्रे निशारूपे प्रलयकाले कारणेषु सुप्तशक्तिषु जगदीश्वरे आत्मनि निधाय निमीलितात्मा आत्मनि स्वस्मिन्नेवासीत् सोऽयं किलेति सम्बन्धः । 'न्यमीमिषदा' इत्यत्राऽकारस्य समन्तादित्यर्थ उक्तः । अर्थान्तरं चाह- **पूर्णत्वादिति ॥** यदेतत् आः पूर्णं तन्यमीमिषदित्यन्वयः । अभीक्ष्णं सङ्कल्प इति कस्य विशेषणमिति न ज्ञायतेऽत आह- **अभीक्ष्णमिति ॥** लिङ्गव्यत्ययोऽयमित्याशयवांस्तदर्थमाह- **सङ्कल्पकमिति ॥** 'उपनिषदं भो ब्रूहि' इति प्रश्ने 'तस्यै तपोदमःकर्मेतिप्रतिष्ठा' इत्यप्रतिष्ठोक्तिः कथमित्यतः प्रश्नाभिप्राय- कथनेन घटयन्नाह- **सप्रतिष्ठामिति ॥** निर्णय इत्येतत् सत्यपदेन व्याख्यातत्वेऽपि अस्पष्टत्वात् पुनर्व्याकरोति- **सत्यमिति ॥** ननु सत्यमिति मीमांसा इति कुतः? सत्यवचने प्रसिद्धत्वादित्यतो निर्वचनप्रमाणेन समर्थयते- **निर्णीयत इति ॥** ननु विद्यास्थानानां चतुर्दशत्वात् कथं 'वेदाः सर्वाङ्गानि सत्यमायतनम्' इति स्थानत्रित्वोक्तिरित्यतो विद्यास्थानानां चतुर्दशत्वेऽपि विवक्षाभेदात् त्रित्वोक्ति-रित्याह- **ऋग्यजुरित्यादिना ॥** शिक्षाद्यं तथा स्मृतयश्चाङ्गानीत्युच्यन्ते । मीमांसा तर्कशास्त्रं च सत्यमित्युच्यते । यतस्तस्माद्विद्यायतनं त्रयमित्युक्तमित्यर्थः ।

**॥ इति चतुर्थः खण्डः ॥**

**वामनटीका–** आस्थानं मन्दिरादि मूलाधारम् । स्थानानि भाण्डादिवत् तत्रत्यग्रहणपात्राणि । अथापि 'यदेतत्' इत्यादिवाक्यानि विस्पष्टं व्याख्याति– 'विद्युत्सूर्य' इत्यादिभाष्येण । 'व्यद्युतदा३' 'न्यमीमिषदा३' इत्युभयत्रापि प्लुताकारभावात् विद्युदादिप्रकाशद्योतनमक्ष्णोर्निमीलनं चात्यन्तं विलक्षणमेवेति गम्यते । स्वयमदृश्यतया तत्प्रकाशकत्वात् । अनिद्रतया वर्तमानत्वाच्च । आ समन्तात् इति तद्भाष्येऽ-प्याकारद्वयं वर्तते– **आऽऽसमन्तात् इति ॥** विद्युत् सूर्यादिप्रकाशनं विष्णुधर्म एवेत्यत्र स्मृत्यन्तरमप्याह– **'यदादित्यगतम्' इत्यादि ॥** 'तमेव भान्तम्' इत्यादिश्रुत्यन्तरं च । निमीलनं च विष्णुधर्मः प्रसिद्धः । 'स वै किल' इति भागवतवचनात् । अयं कृष्णः स पुरातनः पुरुषो वै किल । यः त्रिगुणात्मनो जगतः अग्रे एक एव स्वतन्त्रो निमीलितात्माऽसीत् । स आत्मन्यविशेषः स्वगतभेदवर्जितः । 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुतेः । 'गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते' इत्यादेश्च । जगत आदानादिकर्तरि स्वस्मिन् ईश्वरे सुप्तासु शक्तिषु । तात्त्विकदेवा ह्यत्र शक्यत्वाच्छक्तय उच्यन्ते । तासु विष्णौ सुप्तासु । इत्यधिदैवतं आदेशः विशेषधर्मोपदेशनम् । अथाध्यात्मं स क्रियते 'यदेतत्' इत्यादिना । अयमर्थः– यदेतत् प्राकृतं मनः ब्रह्म प्रति गच्छतीव प्रतीयते, नहि सम्यग् गच्छति येन, अनेन ब्रह्मणैव मन एनत् ब्रह्म किञ्चित् उपस्मरति च । अभीक्ष्णं सङ्कल्प इति मनसो विशेषणम् । तदात्मकत्वात् तस्य । अधिदैवं विद्युदादिप्रेरकं ब्रह्म अध्यात्मं मनआदिप्रेरकमिति यावत् ।

अथाप्यस्य व्याप्त्यादिविशेषानाह– **तद्ध इति ॥** सर्वदेशवस्तुषु ततत्वात् वननीयत्वाच्च तद्वनं नाम तद् ब्रह्मेत्युक्तम् । एवं तदुपासकः सर्वभूतैरपेक्षितो भवति । एतद् ब्रह्म ।

एतैर्विशेषणैस्तदर्थं श्रुत्वा हरः पुनः अपि ब्रह्माणमपृच्छत् । सप्रतिष्ठां सायतनां 'उपनिषदं भो ब्रूहि' इति । एवं सम्प्रार्थयदित्यर्थः । अविज्ञात-प्रार्थनस्यापि प्रश्नत्वाविरोधात् । एवं प्रार्थितो ब्रह्मा पुनस्तमाह– 'उक्ता त उपनिषत्' इति । तदेव विशिनष्टि– **'ब्राह्मीम्' इत्युत्तरवाक्येन ।** तद्वाक्यस्याभिप्रायमाह– **सम्यगेवेत्यादिभाष्येण ॥**

उपरि निषादयतीति उपनिषत् रहस्यविद्या । उक्ता ते रहस्यविद्या । सम्प्रति तु विद्यारहस्यं वक्ष्यामीत्यर्थः । अथास्य ब्रह्मविद्यायास्तपआदीनि प्रतिष्ठा मूलाधारः । वेदादीनि आयतनम् पात्रम् । 'निर्णीयते' इत्यादेः शब्दनिर्णय-वाक्यस्यायमर्थः यदिदं श्रुतिस्मृत्युदितं अर्थजातं तत् सर्वं अप्यनया सत्यमिदमिति सम्यग् यथावस्त्वेव सुव्यक्तं निर्णीयते यतः तस्मात् मीमांसाशास्त्रं सत्यमित्युच्यते ।

'ऋग्यजुः' इत्यादिना विद्यानिर्णयवाक्येन वेदादिविशेषमाह । ऋगादयोऽष्टौ वेदाः । शिक्षादिषट्कं व्यासादिस्मृतयश्च वेदाङ्गानि । अथ मीमांसाशास्त्रं सत्यं इत्युच्यते । तद् वेदादि त्रयं विद्यायतनं ब्रह्मज्ञानस्य निवासस्थानम् ।

एवम्भूताया विद्यायाः फलमाह– **यो वा एतामित्यादिना** ॥ य एव एतां ब्रह्मविद्यां एवं सप्रतिष्ठां सायतनां वेद स पाप्मानं अनादिमनन्तानन्तपरम्परमपि निःशेषतः अपहत्य अनन्ते सदातने स्वर्गे सुखैकायतने लोके वैकुण्ठादौ परैरत्यन्तज्येये विष्णावेव प्रतितिष्ठति अनन्तकालमपुनरावृत्त्या । शाखान्ते द्विरुक्तिस्तत्रोक्तस्यार्थस्य सर्वस्यावधारणार्था ।

## ॥ इति चतुर्थः खण्डः ॥

**प्रकाशिका-** क्षणिकविद्युन्मात्रप्रकाशकत्वस्यातिमहिमसम्पादकत्वाभावाद्विद्युतः विशेषेण द्युतः प्रकाशमानान् इति योगमाश्रित्यार्थमाह भाष्यकारो **विद्युतः सूर्यादिप्रकाशानिति** । आ इत्युपसर्गमनूद्य तस्यार्थमाह- **आ समन्तादिति** ॥ अभि अभितः वि विशेषणेत्यर्थकोपसर्गद्वयपूर्वकस्य 'द्युत प्रकाशने' इति धातो-रन्तर्णीतणिजन्तत्वमभिप्रेत्यार्थमाह- **प्राकाशयदिति** ॥ 'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्' इति काव्यकारेणाप्युक्तत्वात् स्मृतिसमाख्यया च विद्युत्पदं न विद्युन्मात्रवाचकमिति भावेन स्मृतिश्रुती पठति- **यदादित्यगतमिति** ॥ श्रुतौ सर्वमिति सामान्ये-नोक्तत्वाद् विशेषार्थकस्मृतेरादौ ग्रहणम् ।

यद्यपि पञ्चरात्रवाक्ये न्यमीमिषदा इति वाक्यं क्षीरसागरशायिनः कपिलाख्यहरेः प्रतिपादकमित्युदितम् । तथापि तदङ्गीकुर्वन्नेव भाष्यकारो ब्रह्मशतवर्षपर्यन्तं वटपत्रशायिनि हरौ आ इत्युपसर्गार्थस्याभिव्याप्तेः सिद्धेः सोऽप्यर्थ इति

भावेनाऽह- **स वै किलायमिति ॥** आ इत्यस्यार्थान्तरमप्याह- **पूर्णत्वादिति ॥** आ समन्तात् विद्यमान इति व्युत्पत्या आशब्दो भगवत एव पूर्णत्ववाचको भवतीति भावः । अनेनैकैकमूर्त्या एकैकत्र स्थितस्य हरेस्सर्वगतत्वं नास्तीति शङ्का निरस्ता ।

'यदेतद्गच्छतीव' इत्यत्र एतन्मनः गच्छतीवेति यत्तदनेन वै जीवान्तर्नियामकतया स्थितेनानिरुद्धेन । इव शब्देन च क्वचिन्न गच्छतीति सूचितम् । वै शब्देन 'अनिरुद्धः सर्वजीवो हृषीकेशो मनःपतिः' इति स्मृतिप्रसिद्धिं सूचयति । सर्वे जीवाः यस्मात् प्रवर्तन्त इति वा, सर्वान् जीवयतीति वा सर्वजीव इत्यर्थः । सर्वजीवात्मक इत्यर्थकथनं तु 'सर्वातिशायी कः सर्वाध्यक्षः सर्वेश्वरेश्वरः' इत्युपक्रमवाक्येन, 'ब्रह्मरुद्राद्युत्कृष्टचेतनः । 'शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः' इत्युपरितनवाक्येन च विरुद्धम् । अभीक्ष्णं बहुशः सङ्कल्पः सङ्कल्पात्मकं मन उपस्मरतीति यत् तदप्यनेन वै इत्यर्थमभिप्रेत्याऽह भाष्यकारः- **अभीक्ष्णमिति ॥** मनसो विशेषणीकृतसङ्कल्पपदेन इदमिदं करोमी- त्यादिरूपो यः सङ्कल्पः सोऽपि भगवदधीन इति सूचितम् । हेतुगर्भविशेषणानां 'तं देवं पितरं पतिं गुरुतमम्' इत्यादौ बहुलमुपलम्भात् । सङ्कल्पपदस्य नित्यपुल्लिङ्गत्वात् सङ्कल्पो मन इत्यपि 'वेदाः प्रमाणम्' इतिवद्युज्यते । सङ्कल्पकमिति तु तात्पर्यकथनम् ।

तत् परं ब्रह्म तन्नाम । तदिति नाम यस्य तत् तन्नाम । 'तनु विस्तारे' इति धातोरौणादिके डतुप्रत्यये कृते तदिति शब्दनिष्पत्तिः प्रसिद्धेति ह शब्देनाऽह श्रुतिः । तत् परं ब्रह्म वनंनाम । 'वन सम्भजने' इति धातोः भजनीयत्वाद्वन- शब्दवाच्यमित्यर्थः ।

'उपनिषदं भो ब्रूहि' इति हरेण पृष्टे उपनिषदेव वक्तव्या । 'तस्य तपो दमः कर्मेति प्रतिष्ठा । वेदाः सर्वाङ्गानि सत्यमायतनम्' इति प्रतिष्ठायतनयोः कुतो निरूपणम्? अपृष्टपरिभाषणत्वप्रसङ्गात् । अतः प्रश्नवाक्येऽपि 'स प्रतिष्ठां सायतनाम्' इत्युपस्कर्तव्यमिति भावेनाऽह भाष्यकारः- **स प्रतिष्ठामिति ॥** एवं च भारतीभावं भारतीपतिरेव वेद, नापर इति ज्ञेयम् । 'उपनिषदं भो ब्रूहि'

इति प्रश्नवाक्ये च वाक्यमात्रकथनस्य नायं प्रश्नः । चतुर्मुखमुखादेव स्वयोग्य-सकलवेदानां हरेणापि प्रागेव पठितत्वात् । अत उप वाक्यस्य समीपे, वाक्यस्थपदानां समीपे च यन्नितरां वेदप्रतिपाद्यत्वेनाभिमतदेवादिभ्यः कर्मादिभ्य-श्चातिशयेन, महायोगेन विद्वद्रूढ्या चेति यावत्, सीदति 'षदॢ विशरणगत्यवसादनेषु' इति धातोर्वाक्यसमन्वयेन वाक्यानां, पदसमन्वयेन पदानां च विषयतया तिष्ठतीति व्युत्पत्या सकलोपनिषत्प्रतिपाद्यं परं ब्रह्मैवोपनिषदित्युच्यते । तां च प्रकर्षेण प्रमात्येभिरिति व्युत्पत्या प्रमास्थिरीकरणहेतुभूततपआदिकरणैः सह प्रमया मूलाधारभूतायतनशब्दवाच्यप्रमाणैस्सह ब्रूहीति प्रश्नवाक्यार्थः । अत एव 'उक्ता त उपनिषत्' इत्युक्त्वा 'ब्राह्मीं वाव त उपनिषदमब्रूम' इति श्रुतिः स्वयमेव ब्राह्मीमित्युक्त्या प्रतिपाद्यब्रह्मविषयोऽयं प्रश्न इति सूचयति । एतत्प्रश्नपरिहाराय च प्रतिपाद्यब्रह्ममहिमरूपसकलेन्द्रियप्रेरकत्वसकलदेवोत्तम-त्वादिगुणविशिष्टतया अस्या एव उपनिषद् उक्तिकाले प्रतिपाद्यब्रह्मस्वरूप-मप्युक्तमिति ज्ञेयम् । अवशिष्टप्रश्नद्वयोत्तरं तूत्तरवाक्येनैवोच्यत इति विज्ञेयम् । 'उक्ता त उपनिषत्' इति वाक्यस्य उपनिषत् उपनिषत्स्वरूपमुक्त-व्युत्पत्त्या उपनिषत्पदवाच्यं ब्रह्मस्वरूपं ते उक्तमित्यर्थः ।

सत्यं सत्यवचनमिति भ्रमनिवारणायाऽह- **सत्यमिति** ।। मीमांसेति ।। व्यस्तं मीमांसयेत्यत्र व्यस्तं व्यासेन प्रपञ्चेन सहितं यथा भवति तथा व्यस्तमित्यर्थः । प्रमाकरणानां पञ्चरात्रभारतमूलरामायणवैष्णवपुराणानां तप आदिनियमस्वरूप-प्रमापकवैष्णवस्मृतीनां च सत्वात् कथं त्रित्वेन पर्यवसानमित्यत आह- **ऋग्यजुरिति** ।। वेदापेक्षिततपआद्यङ्गप्रतिपादकस्मृतीनां वेदस्वरूपतदर्थप्रमापकत्वेन वेदाङ्गभूतशिक्षादिष्वेवान्तर्भावेनोक्तम्- **'शिक्षाद्याः स्मृतयस्तथा । अङ्गानि'** इति ।

**नियन्ता सर्वदेवानां निहन्ता सर्वरक्षसाम् ।**
**स मन्ता कमलाकान्तः समन्तात्सुखदोऽस्तु मे ।।**

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचिता
तलवकारोपनिषद्भाष्यप्रकाशिका समाप्ता ।।

**वे.विवरणम्–** 'अथ हैनं सर्वाणि भूतानि संवाञ्छन्ति उपनिषदं भो ब्रूहि' इत्येकवाक्यता प्रतीयते । तदसत् । उक्ता त उपनिषत् इत्युत्तरवाक्यानुपपत्तेरिति भावेन संवाञ्छन्तीत्यनन्तरं वक्तव्यमाह- **एतच्छ्रुत्वेति** ॥ उपनिषच्छब्दार्थो विद्याकारमिति विद्याप्रतिपाद्यमित्यर्थः । स प्रतिष्ठां सायतनामित्यपि ग्राह्यम् । उक्ता त उपनिषत् इत्यस्यार्थमाह- **विद्यावेद्यमिति** ॥ अब्रूमेत्यनन्तरं वक्तव्यमाह- **आस्थानमिति** ॥ तस्यै तप इति वाक्यं व्याचष्टे- **तप इति** ॥ विद्या तेषु तिष्ठतीति सम्बन्धः । वेदाः सर्वाङ्गानि सत्यमायतनम् इत्यस्यार्थमाह- **स्थानानीति** ॥ निर्णय इति सत्यशब्दार्थः । यो ह वा एताम् इति फलवाक्यं प्रसिद्धस्वर्गलोके तिष्ठतीति प्रतीतिनिरासाय व्याचष्टे- **वेदेति** ॥ अखिलां सप्रतिष्ठां सायतनाम् यच्छब्दश्रवणात् तच्छब्दलाभः । यदेतद्विद्युतोऽभिव्यद्युतदाः इति वाक्यं प्रमाणेन यद् एतत् प्रसिद्धं विद्युतोऽभिव्यद्युतत् स एव आः परं ब्रह्मेति व्याख्यातम् । इदानीम् आ इत्येतद् आङ्रूपोपसर्गभूतं तद् व्यद्युतदित्यत्रापि सम्बध्यत इति भावेन तद्व्याचष्टे- **विद्युत इति** ॥ विद्युच्छब्दस्योपलक्षणत्वं 'ज्योतिःश्रेष्ठो दिवाकरः' इति वचनात् सूर्यस्य ज्योतिः प्राधान्यं चाङ्गीकृत्य सूर्यादिप्रकाशानित्याह । आ इत्यनुवादेन समन्तादिति व्याख्यानम् । तत्र प्रमाणमाह- **यदादित्येति** ॥ अत्र सूर्यादिसर्वप्रकाशकत्वं न लभ्यत इति प्रमाणान्तरमाह- **तमेवेति** ॥ प्रकाशयन्तं तमन्वेव सर्वं सूर्यादि प्रकाशयति । तस्य भासा प्रकाशेन सर्वं जगत् प्रकाशत इत्यर्थः ।

न्यमीमिषदा इत्येतदपि अनूद्य पूर्ववदेव व्याचष्टे- **न्यमीमिषदिति** ॥ अत्रोभयत्र छन्दसि परेऽपि व्यवहिताश्चेत्युक्तमनुसन्धेयम् । परमात्मनो निर्मीलिताक्षत्वे प्रमाणमाह- **स वा इति** ॥ गुणेभ्यः सत्वादिगुणेभ्योऽग्रे तदुत्पत्तेः पूर्वम् । निशि महाप्रळये । सुप्तशक्तिषु सत्वादिशक्तिषु य एकः प्रधानः पुरातनः पुरुषः पूर्णषड्गुणः । निर्मीलितात्मा निर्मीलिताक्षस्वरूपः सन् न विद्यते विशेष अधिको यस्मात् स तथोक्तस्तस्मिन् जगदात्मनि जगदादानादिकर्तरि ईश्वरे आत्मनि स्वस्मिन् आसीत् । स एवायं कृष्णः किलेति सम्बन्धः । प्रमाणे आ इत्येतत् परब्रह्मवाचकमिति व्याख्यातम् । तत्र निमित्तमाह- **पूर्णत्वाच्चेति** ॥ इत्युच्यते परं ब्रह्मेति शेषः । चशब्दो व्याख्यानान्तरसमुच्चयार्थः । अभीक्ष्णं

सङ्कल्पः इति कस्य विशेषणमिति न ज्ञायते । अत आह- **अभीक्ष्णमिति ॥** ननु सङ्कल्पो नाम मनोवृत्तिविशेषः, 'कामः सङ्कल्पः' इति श्रुतेः । तत्कथं मनसो विशेषणमित्यत आह- **सङ्कल्पकमित्यर्थ इति ॥** ननु उपनिषदं भो ब्रूहि इति पृष्टे उक्ता त उपनिषत् इत्येव वक्तव्यम् । न तु तस्या इत्यादिना विद्यायाः प्रतिष्ठायतने वक्तव्ये तयोरपृष्टत्वात् ॥

किञ्चोपनिषदं विद्यावेद्यं सम्यग् ब्रूहीति हि प्रश्नाभिप्रायः । अन्यथा विद्यावेद्यस्योच्यमानत्वेन तत्सिद्धार्थत्वप्रसङ्गात् । तथाच कथं तत्र उक्ता त उपनिषत् इति परिहारः । यावद् विद्यावेद्यस्वरूपस्य सम्यगकथितत्वादित्यत प्रश्नपरिहारवाक्ययोरभिप्रायमाह- **सप्रतिष्ठामिति ॥** परिहारवाक्यानुसारेण प्रश्नवाक्येऽपि तद् ग्राह्यमिति भावः **सम्यगेवेति ॥** विद्यावेद्यस्वरूपस्य सम्यगुक्तिर्नाम स्वेन साकल्येनाज्ञेयत्वोक्तिरेव । नतु यावत्तत्स्वरूपोक्तिः । तथात्वे उपनिषत्स्वरूपं सम्यग् वक्तुं न शक्यत इत्येव वक्तव्यतयोक्ता त उपनिषदिति परिहारानुपपत्तेः । स्वेन साकल्येनाज्ञेयत्वं च न विद्म न विजानीम इत्यादावुक्तमिति भावः । नास्ति इत्याहेति शेषः । तस्यै तपो दमः कर्मेति प्रतिष्ठा इति वाक्ये पदानां व्यवहितत्वेनान्वयं दर्शयति- **तप इति ॥** तस्यै इति चतुर्थी षष्ठ्यर्थे इति भावेनोक्तम्- **विद्याया इति ॥** प्रतिष्ठाशब्दस्याऽयतनशब्देन अगतार्थतासिद्ध्यर्थं तदभिप्रायमाह- **तद्वस्त्विति ॥** नतु विद्यायतनत्वं नाम विद्योत्पत्तिकारणत्वम् । तथाच सत्यशब्दार्थस्य सत्यवचनस्य तपआदिवत् विद्याप्रतिष्ठापकत्वमेवोचितम् । ननु विद्यायतनत्वमित्यतः सत्यशब्दार्थमाह- **सत्यमिति ॥** मीमांसा उच्यते इति शेषः । प्रसिद्धिविरोधपरिहाराय तत्र प्रमाणमाह- **निर्णीयत इति ॥** सम्यक् सत्यमिति परमार्थसत्यमितीत्यर्थः । इदमित्यस्य विवरणम्- **श्रुतीति ॥** स्फुटमित्यस्य विवरणम्- **व्यक्तमिति ॥** ब्रह्मणो निश्चयो यया सेति विग्रहः । अनेन सत्यशब्दस्य निर्णय इति प्रमाणकृतं व्याख्यानमपि समर्थितम् ।

ननु विद्यायतनानाम् ऋगादिचतुष्टयमितिहासः पुराणानि शिक्षादिषडङ्गानि मन्वादिस्मृतिर्मीमांसा चेति चतुर्दशत्वात् कथं वेदाः सर्वाङ्गानि सत्यमायतनमिति

त्रित्वोक्तिरित्यतश्चतुर्दशत्वेऽपि विवक्षाभेदेन त्रित्वोक्तिर्युज्यत इति भावेन प्रमाणमाह- **ऋगिति** ॥ पञ्चरात्रं भारतं मूलरामायणमिति इतिहासप्रभेदोक्तिः । भगवत्परमेवेति सम्बन्धः । सत्यमित्यनुवादेन मीमांसेति व्याख्यानम् ॥

## ॥ इति चतुर्थः खण्डः ॥

**वे.श्रुत्यर्थः–** एवमधिदैवमध्यात्मं चोपास्यभगवत्स्वरूपं श्रुत्वा हरः पुनरपि ब्रह्माणं पृच्छति- **उपनिषदमिति** ॥ भो ब्रह्मन् सप्रतिष्ठां सायतनाम् उपनिषदं विद्यां तद्वेद्यमिति यावत् । सम्यग् ब्रूहीति हरोऽपृच्छदिति शेषः । एवं पृष्टो ब्रह्मा परिहारमाह- **उक्तेति** ॥ ते तव उपनिषद् विद्या मयोक्ता । तदेव विशदयति- **ब्राह्मीमिति** ॥ ते तव ब्राह्मीं ब्रह्मप्रतिपादिकाम् उपनिषदं विद्याम् अब्रूमेति ब्रह्मोवाच । वावेति प्रसिद्धिद्योतकं निपातद्वयम् । सम्यगेव मयोपनिषत्स्वरूपमुक्तं साकल्येनागोचरत्वस्योक्तत्वात् । अतस्तत्र वक्तव्यं नास्तीति भावः । इदानीं विद्याप्रतिष्ठामाह- **तस्या इति** ॥ तपश्चान्द्रायणादिकम् । दम इन्द्रियनिग्रहः । कर्म अश्वमेधादिरूपं चेत्येतत् । तस्यै तस्या उपनिषदो विद्यायाः प्रतिष्ठा । विद्यातपआदिमत्सु प्रतितिष्ठतीत्यर्थः । इदानीं विद्यासाधनमुपदिशति- **वेदा इति** ॥ वेदा ऋगादयः, अङ्गानि शिक्षादीनि, सत्यं मीमांसा तस्या विद्याया आयतनमुत्पत्तिकारणमित्यर्थः । प्रतिष्ठायतनसहितोपनिषत्स्वरूपवेत्तुः फलमाह- **य इति** ॥ योऽधिकारी एतां स प्रतिष्ठां सायतनाम् उपनिषदं वेद स पाप्मानमपहत्य अनन्ते देशतः कालतो गुणतश्च परिच्छेदशून्ये स्वर्गे स्वरूपभूतरमणज्ञानरूपे लोके प्रकाशरूपे ज्येये सर्वोत्तमे विष्णौ प्रतितिष्ठति । द्विरुक्तिरादरार्था ।

## ॥ इति चतुर्थः खण्डः ॥

**नृसिंहप्रकाशिका–** एतत् श्रुत्वा हरः पृच्छति- **उपनिषदमिति** ॥ भो ब्रह्मन् उपनिषदं वेदविद्यां ब्रूहि इत्यपृच्छत् । रुद्रेण पृष्टो ब्रह्मा किं विद्यावेद्यं पृच्छसि उत हृदये विद्यावस्थानकारणानि पृच्छसि । अथवा विद्योत्पत्तिकारणानि पृच्छसीति विकल्पान् हृदि निधाय आद्यस्योत्तरमाह- **उक्तेति** ॥ ते उपनिषदुक्ता । विद्यावेद्यं परं ब्रह्म प्रतिपादितमिति भावेन एतदेव विवृणोति- **ब्राह्मीमिति** ॥ ते

उपनिषदं ब्राह्मीं ब्रह्मप्रतिपादिकाम् । अब्रूम इत्याद्यस्योत्तरम् । द्वितीयस्योत्तरमाह- **तस्यै तप इति ॥** तस्यै तस्याः तपः वेदैर्भगवदालोचनम् । दमः इन्द्रियनिग्रहः । कर्म वेदोक्तधर्मानुष्ठानम् । इति त्रीणि । प्रतिष्ठा हृदये विद्यावस्थानकारणानि । तृतीयस्योत्तरमाह- **वेदा इति ॥** वेदाः ऋगाद्याः अपौरुषेयाः । पञ्चरात्रादिपौरुषेयाश्च । सर्वाङ्गानि शिक्षादीनि । सत्यं मीमांसा । इत्येतत्त्रयं आयतनम् । विद्योत्पत्तिकारणम् । एतदुपनिषद्वेत्तुः फळमाह- **य इति ॥** यो वा एतामुपनिषदं एवं वेद । स पाप्मानं सर्वपापानि अपहत्य अनन्ते अपरिच्छिन्ने स्वर्गे स्वरूपभूतरमणज्ञानवति लोके प्रकाशरूपे ज्येष्ठे सर्वश्रेष्ठे विष्णौ प्रतितिष्ठति । सर्वोपनिषदार्थवधाराणार्था द्विरुक्तिः ।

**विद्याधीशजयव्यासरघूत्तममुनिस्तुतम् ।**
**रमारमणनिष्ठार्थं प्रपद्ये मध्ववल्लभम् ॥**

**॥ इति श्री विद्याधीशार्यशिष्यनरसिंहभिक्षुरचिता**
**तलवकारोपनिषदर्थप्रकाशिका समाप्ता ॥**

**स.भाष्यविवृतिः–** तत् अनिरुद्धाख्यं रूपं तत् वनमित्युपासितव्यं इत्यध्यात्मं इति तस्य आदेश इत्यन्वयः । एवं विदितुः फलमाह- **स य इति ॥** स य अधिकारी एतद् ब्रह्म एवं तच्छब्दवाच्यवनशब्दवाच्यं विद्युदादिप्रेरकं च वेद एनं सर्वाणि भूतानि अभिसंवाञ्छन्ति ह आश्रयतया कामयन्ते ह । तदेतदाचक्षते । 'व्यद्योतयद्विद्युदादीन्' इत्यारभ्य 'भवेत्सर्वैरपेक्षितः' इत्यन्तेन । अत्र विद्युत इति प्रातिपदिकांशबहुवचनांशयोः विद्युदादीनीति अर्थापनम् एवं स्ववचनभाष्ये विद्युतः सूर्यप्रकाशानित्यत्र प्रकृतिः सौदामिन्याभिधायिनी स्पष्टेति। बहुवचन-मात्रार्थमचकथत् । प्रकाशानित्यत्र कर्तरि अजन्तात् शस् । तदेतद्धरः अध्यात्ममधिदैवतं च उपास्यं रूपं शुश्रुवान् सन् पुनरेव ब्रह्माणमुपनिषदं विद्याकारं ब्रह्म ब्रूहीत्यप्राक्षीत् । उच्यमानो ब्रह्मा किं त्वं विद्यावेद्यं पृच्छसि? विद्याप्रतिष्ठापकं विद्योत्पादकं वा इति विकल्प्य आद्यां शङ्कां 'उक्ता त उपनिषत्' इत्यनेन न्यवीवरत् । तदेव विवृणोत् । 'ब्राह्मीं वाव तदुपनिषदमब्रूमेति' विद्यावेद्यं तव प्रोक्तमितिभावः । अथ अविद्याप्रतिष्ठापकं

अपृच्छमिति द्वितीयं पक्षमद्वितीयमालभसे । तदेदमुत्तरम् । तस्यै तपोदमकर्मेति प्रतिष्ठेति । तपोदमःस्वधर्मेषु ये स्थिराः तेषु खलु विद्यावतिष्ठते । अथाविद्योत्पादकं किमित्यपृच्छः तदेदमुत्तरम् । तस्यै तपो दमः कर्मेति प्रतिष्ठेति। तपो दमः स्वधर्मेषु ये स्थिराः तेषु खलु विद्यावतिष्ठते । अविद्योत्पादकं किमित्यपृच्छः तदेदमुत्तरं 'वेदास्सर्वाङ्गानि सत्यमायतनम्' । ऋग्यजुःसामाथर्वपञ्चरात्रभारतमूलरामायणैस्तदात्मकपुराणानि वेदाः । शिक्षाद्यं तथा स्मृतयः । अङ्गानि सत्यं मीमांसा आयतनं विद्योत्पादकं सत्यमाचष्टे सत्यापयति । ततो निर्णीयते अनेनेति निर्णयः । पचाद्यचि णेरनिटीति णिलोपे निमित्तापाये नैमित्तिकस्याप्यपाय इति पुकः अपसरणे सत्यमितिरूपं निष्पन्नम् । सत्यं निर्णय इति मीमांसोच्यते । एवं वेदितुः फलमाह- **य इति ॥** योऽधिकारी एतामुपनिषदं ब्रह्मस्वरूपं विद्यां च अखिलां निखिलां स प्रतिष्ठां सायतनां चेतिभावः । वेद जानाति पाप्मानमपहत्य निर्हत्य अनन्ते विष्णौ अनन्तसुखज्ञानात्मकस्वर्गे निर्दुःखसुखरूपे लोके प्रकाशके ज्येये प्रशस्ये वृद्धे ईयसुन् सकार लोपः । ज्यादादीयसः इति आत्वाभावश्छान्दसः । अत एव पाणिनिः हि अभाणीत् । 'प्रशस्यः श्रः' 'ज्य च' 'वृद्धस्य च' इति ईयसुन् प्रकरणे । प्रतिनिष्ठति पूर्वोक्तार्थावदिधारयिषया प्रतितिष्ठतीति द्विरुक्तिः तदेवाह वभाड भाष्यकारः । 'एतच्छ्रुत्वा हर' इत्यस्मादारभ्य 'यो विष्णौ प्रतितिष्ठति' इत्यन्तेन प्रमाणभाष्येण तथा विधुसूर्यादिप्रकाशानित्यस्मादारभ्य अभीक्ष्णं सङ्कल्प इति मनसो विशेषणं, सङ्कल्पकमित्यर्थ इत्यन्तं स्ववचनभाष्यं विहाय 'स प्रतिष्ठां सायतनां उपनिषदं ब्रूहि' इत्युक्ते सम्यगेव मया उपनिषत्स्वरूपमुक्तं इत्यादिस्ववचनभाष्यादारभ्य अङ्गानि सत्यं मीमांसा तद्विद्यायतनं त्रयं इत्यन्तेन च प्रमाणभाष्येण । अन्तरास्थितस्ववचनभाष्यं तु तस्यैव आदेशो यदेतद्विद्युतोऽभिव्यद्युतदा इति न्यमीमिषदा इत्यत्र आ आः इति छेदः । इत्यस्य भागस्य अभीक्ष्णं सङ्कल्प इत्यस्य चांशस्य व्याख्यानम् । अत्रास्मिन्नन्तरास्थितभाष्ये किञ्चिद्व्याचिख्यासितम् । पूर्णत्वाच्च आ इति । तदुक्तं श्रीमन्महैतरेयभाष्ये एतत्सन्निहित्वाच्च 'पूर्णत्वात् आ इति कान्तितः' । 'इतत्वाच्चातत्वाच्च स इतन्नाम केशवः' इति । 'स वै किलायं पुरुषः पुरातनो य एष आसीदविशेष

आत्मनि । अग्रे गुणेभ्यो जगदात्मनीश्वरे न्यमीलीतात्मा निशि सुप्तशक्तिषु' । अन्योन्यमासीत् सञ्जल्प उत्तमश्लोकचेतसाम् । 'कौरवेन्द्र पुरस्त्रीणां सर्वश्रुतिमनोहरः' इति पूर्वश्लोके सर्वश्रुतिमनोहरसञ्जल्पस्तुतिलक्षणः सल्लापः असीदित्यवोचत । कोऽसौ सल्लाप इत्यत आह- **स वा इति ॥** स्त्रियः किल एवमूचुः । हर्यपेक्षया अप्रधानत्वात् । गुणशब्दवाच्येभ्यो महदादितत्त्वेभ्यो अग्रे निशि महाप्रळये सुप्तशक्तिषु सत्वादिशक्तिष्विति श्रीमद्भागवततात्पर्यम् । तस्यार्थः । शक्यत्वात्तदधीनत्वात् शक्तिशब्दवाच्या सु सत्वादिगुणाभिमानिषु श्रीभूदुर्गासु इति सुप्तासु जगद्व्यापारान्विहाय हरौ रममाणासु सतीषु । यः एकः प्रधानो जगदात्मनि जगदादानकर्तरि संहर्तरि न विशेषो अधिको यस्मात् सोऽविशेषः । तस्मिन्नीश्वरे ईशानादिशक्तिमति स भगवः कस्मिंप्रतिष्ठित इति 'स्वे महिम्नि' इति श्रुतेः । स्वरूपाधारे स्थितः निमीलितात्मा 'तुच्छेनाभ्यपिहितं यदासीत्' इति श्रुतेः । गुणतोऽल्पतमादिरूपया निगूहितः सः पुरातनपुरुषो विष्णुरयं किल कृष्ण इति परमार्थः ।

## ॥ इति चतुर्थः खण्डः ॥

**वरदतीर्थीयम्-** 'उपनिषदं भो ब्रूहीति' चोद्यवाक्यं व्याख्याति- **एतदिति ॥** विद्याकारं विद्यास्वरूपमित्यर्थः । तस्यै तपो दमः कर्मेति प्रतिष्ठा इत्येतद् व्याचष्टे- **आस्थानमिति ॥** आस्थीयते विद्या अस्मिन्निति आस्थानं विद्याया अधिकरणम् । किं तदास्थानमित्यत आह- **तपइति ॥** विद्यायाः कारणप्रतिपादकवाक्यं व्याचष्टे- **विद्येति ॥** विद्यास्थानानीति । विद्योत्पत्तिकारणानि कथ्यन्त इत्यन्वयः । तानि कानि विद्योत्पत्तिकारणानीत्यत आह- **तस्या इति ॥** तस्यास्तु वेदा अङ्गानि निर्णयः । तस्याः ब्रह्मविद्यायाः चत्वारो वेदाः, शिक्षाद्यङ्गानि, निर्णयो मीमांसा इत्येतान्युत्पत्तिकारणानीत्यर्थः । एवमुक्तप्रकारेण उपनिषद्वेत्तुः फलमुच्यते 'यो ह वा एतां उपनिषदं वेदेति' । तस्यार्थो **वेदैरेतामेवमखिलामिति ॥** विद्युतोऽभिव्यद्युतदा३ इत्यादिवाक्यं प्रमाणेन व्याख्यातं पुनः स्ववचनेन व्याचष्टे- **विद्युत इति ॥** विद्युतः सूर्यादिप्रकाशान् । आसमन्तात् व्यद्युतत् प्राकाशयत् । सूर्यादिप्रकाशस्य भगवदधीनत्वे श्रुतिस्मृती

क्रमेण प्रमाणयति- **यदित्यादिना** ॥ 'न्यमीमिषदा' इत्यस्य वाक्यस्य स्वाभिहितेऽर्थे समाख्यामप्याह- **स इति** ॥ यः पुरातनः अनादिकालीनः पुरुषः पूर्णषड्गुणः गुणेभ्यः अग्रे सत्वादिगुणोत्पत्तेः पूर्वमेव निशि प्रलये सुप्तशक्तिषु अण्डोत्पत्तिकारणतत्त्वेषु सुप्तशक्तिषु सत्सु, निमीलितात्मा निमीलिताक्षो भूत्वा जगत् विश्वं ईश्वरे आत्मनि सामर्थ्यवति स्वस्मिन्नाधाय स्थितोऽभूत् । अयं कृष्णः स पुराणपुरुषो विष्णुः किलेत्यर्थः । न्यमीमिषदा इत्यत्र आकारस्य समन्तादित्यर्थ उक्तः । अर्थान्तरञ्चाह- **पूर्णत्वादिति** ॥ पूर्णत्वाच्च आः ।

अभीक्ष्णं सङ्कल्प इति कस्य विशेषणमिति न ज्ञायते । अत आह- **अभीक्ष्णमिति** ॥ विशेषणस्य सम्बन्धमुक्त्वा सङ्कल्पशब्दार्थमाह- **सङ्कल्पकमिति** ॥ ननु उपनिषत्स्वरूपस्य पूर्वमेव निरूपितत्वात् उपनिषदं भो ब्रूहीति प्रार्थना, तपो दमः कर्मेति प्रतिष्ठा इत्यनेनाप्रार्थितस्य प्रतिष्ठादेः कथनं च कथं घटत इत्यत्र आह- **सप्रतिष्ठामिति** ॥

सप्रतिष्ठां सायतनामुपनिषदं ब्रूहीत्युक्ते सम्यगेव मयोपनिषत्स्वरूपमुक्तम् । तत्र वक्तव्यं नास्ति । तपो दमः कर्म च विद्यायाः प्रतिष्ठा । तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थः । उपनिषदं भो ब्रूहीत्यत्र नोपनिषन्मात्रस्य वचनं प्रार्थ्यते । किन्तु प्रतिष्ठादिसहितोपनिषद एव अतो न ज्ञानविषयता प्रार्थनायाः । नाप्यनाकाङ्क्षिताभिधानं प्रतिष्ठादीनामप्याकाङ्क्षितत्वादिति । इदानीं सत्यशब्दार्थं स्ववाक्येन स्पष्टयति- **सत्यमिति** ॥ सत्यमिति मीमांसा । इत्यत्र चतुर्दश विद्यास्थानानां निरूपितत्वाद् कथं 'वेदाः सर्वाङ्गानीति' 'सत्यमायतनमिति' विद्यास्थानानां त्रित्वोक्तिरित्यतस्तान्यपि त्रिषु स्थाने अन्तर्भूतानीत्यतो न विरोध इति भावेनाह- **ऋगिति** ॥ वेदाः सर्वाङ्गानीति वाक्ये वेदशब्देन चत्वारो वेदाः पुराणानि च विवक्षितानि । अङ्ग शब्देन च शिक्षादिषडङ्गानि धर्मशास्त्रञ्चेति सप्तकमुच्यते । सत्यशब्देन च न्यायमीमांसा चेति द्वयम् । अतो वेदाङ्गसत्यशब्दैः चतुर्दशविद्यास्थानानां सङ्गृहीतत्वात् न स्मृतिवाक्यविरोधः ।

॥ इति चतुर्थः खण्डः ॥

**खण्डार्थः–** एवं श्रुत्वा पुनः ब्रह्माणं पृच्छत्युमापतिः- **उपनिषदं भो ब्रूहीति ॥** भो ब्रह्मन् उपनिषदं सप्रतिष्ठां सायतनां ब्रूहीति, अपृच्छदिति शेषः । किमुपनिषत्प्रतिपाद्यं पृच्छसि, उत उपनिषदुत्पन्नविद्यायाः अवस्थानकारणं, किं वा विद्यायाः कारणमिति हृदि विकल्प्य क्रमेणोत्तरमाह- **उक्ता त इति ॥** ते तुभ्यं ब्राह्मीं ब्रह्मविषयां वा, वेत्यसंशयं, त उपनिषदमुपनिषत्स्वरूपम् अब्रूम अवोचाम, इति ब्रह्मोवाचेति योज्यम् । ब्रह्मेति होवाचेत्यादिना ब्रह्मस्वरूपोक्तेः । तत्र वक्तव्यं किमपि नेति भावः । तस्यै तस्याः ब्रह्मविद्यायाः तपो दमः कर्म च प्रतिष्ठा । तपः कृच्छ्रचान्द्रायणादि, शास्त्रपर्यालोचनम् वा, दम इन्द्रियनिग्रहः, कर्म तु वर्णाश्रमोचितं क्रियानुष्ठानम्, प्रतिष्ठा प्रतिष्ठाहेतुः । तपआदिमत्सु विद्या प्रतितिष्ठतीत्यर्थः । वेदाः ऋगाद्याः तदनुकूलप्रतिष्ठाग्रन्थाश्च, शिक्षा कल्पो व्याकरणम् निरुक्तं छन्दो ज्यौतिषमिति षडङ्गरूपसर्वाङ्गानि । सत्यं मीमांसा, आयतनमुत्पत्तिस्थानम्, तस्या इत्यनुषङ्गः, विद्याया इत्यर्थः । एतदुपनिषज्ज्ञानिनः फलमाह- **य इति ॥** योऽधिकारी एतामुपनिषदं वेद स पाप्मानमपहत्यानन्ते देशकालगुणापरिच्छिन्ने स्वर्गे स्वरुपभूतसुखज्ञानात्मके लोके प्रकाशरूपे ज्येये श्रेष्ठे, ब्रह्मणीति योज्यं, प्रतितिष्ठति प्रतितिष्ठति । द्विरुक्तिः सर्वावधारणार्था ।

**अनन्तगुणपूर्णाय दोषदूराय विष्णवे ।**
**नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥**

॥ इति श्रीराघवेन्द्रयतिकृततलवकारोपनिषत्खण्डार्थः समाप्तः ॥

॥ इति चतुर्थः खण्ड खण्डार्थः ॥

भाष्यम्

यश्चिदानन्दसच्छक्तिसम्पूर्णो भगवान् परः ।
नमोऽस्तु विष्णवे तस्मै प्रेयसे मे परात्मने ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं
तलवकारोपनिषद्भाष्यं सम्पूर्णम् ॥

**व्यासतीर्थीयम्–** मङ्गलावसानस्य शास्त्रस्य प्रचयादिहेतुत्वात् भाष्यं समाप्यान्तेऽपि स्वेष्टदेवतास्तुतिनमनरूपं मङ्गलमाचरति- **य इति** ॥

**यत्पदं मुनिभिर्ध्यातं वेदान्तश्रान्तमानसैः ।**
**तं वन्दे परमात्मानं विष्णुं श्रीमध्ववल्लभम् ॥ १ ॥**

**॥ इतिश्रीमदानन्दतीर्थभगवत्पादविरचिततलवकारोपनिषद्भाष्यस्य विवरणं श्रीमज्जयतीर्थपूज्यचरणशिष्यव्यासतीर्थविरचितं सम्पूर्णम् ॥**

**वामनटीका–** अथेदानीमेतद्भाष्यकारभट्टारको भगवान् गुरूणामपि गुरुतमः सुरवरपुरःसरसज्जननिकरनिरन्तराराधितचरणसरोरुहो ग्रन्थावसाने स्वस्वामिने विष्णवे स्वकृतसमर्पणबुद्ध्या नमस्करोति–

**'यश्चिदानन्दसच्छक्तिसम्पूर्णो भगवान् परः ।**
**नमोऽस्तु विष्णवे तस्मै प्रेयसे मे परात्मने' इति ॥**

**सृष्टिसंहारसच्छक्तिसुखज्ञानादिसद्गुणैः ।**
**पूर्णात्मने मध्वदेवप्रेयसे विष्णवे नमः ॥**

**यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बळादौ ।**
**दशप्रमत्याख्यतृतीयरूपी भाष्यं चकारेदमचिन्त्यशक्तौ ॥**

**टीकां तलवकारोपनिषद्भाष्यस्य लेशतः ।**
**त्रैविक्रमार्यानुचरः कृत्वेमां प्रार्पयद्धरौ ॥**

**नमस्ते श्रीशास्तु प्रियतम समस्तादपि सदा**
**नमस्ते प्राणेश प्रणतसुरसङ्घेष्टसुखद ।**
**नमो वस्तद्दासाः परमगुरवस्तत्वमतिदा**
**नमो वस्तद्दासाः पुनरपि गुरुभ्यो मुहुरपि ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीतलवकारोपनिषद्भाष्यस्य टीका त्रैविक्रमार्यदासविरचिता समाप्ता ॥

**वे.विवरणम्–** एवं समापितभाष्यो भगवानाचार्योऽन्तेऽपि भगवत्स्तुतिनतिरूपं मङ्गलमाचरति- **य इति** ॥

**श्रीमदानन्दतीर्थार्यहृत्सरोजे व्यवस्थितः ।**
**आनन्दादिगुणोद्रिक्तः प्रीयतां कमलापतिः ॥**

**॥ इति श्रीमदान्दतीर्थभगवत्पादाचार्यविरचितस्य तलवकारोपनिषद्भाष्यस्य विवरणं वेदेशतीर्थभिक्षुविरचितं समाप्तम् ॥**

**स.भाष्यविवृतिः–** अन्तेऽपि मङ्गलमाचरति- **य इति** ॥ मे प्रेष्ठाय इत्यशेषमतिमङ्गलम् ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य तलवकारोपनिषद्भाष्यस्य विवरणम् ॥**

**॥ श्रीमत्सत्यविजयपूज्यपादशिष्यसत्यप्रियतीर्थयतिना कृतं समाप्तोत् ॥**

**वरदतीर्थीयम्-** श्रुतिवाक्यस्य कार्यावसानेऽपि मङ्गलमाचरति- **य इति** ।

**रमाकरवराम्भोजसमाराध्योऽपिमाधवः ।**
**पूजितोऽस्तु शतप्रीतिं मया वाक्पुष्पमालया ॥**

**॥ इति वरदतीर्थविरचिता तलवकारोपनिषद्भाष्यटीका समाप्ता ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

॥ हरिः ॐ ॥

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि । सर्वं ब्रह्मौपनिषदम् । माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत् । अनिराकरणमस्त्वनिराकरणं मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥



# भाष्योदाहृतप्रमाणवचनानुक्रमणिका

# उपनिषच्छब्दानुक्रमणिका



ಹರಿಯ ಹಿರಿಮೆಯ ಅರಿವು; ಹರಿಯಲಿ
ಹರಿವ ನಿರಂತರ ಅನುರಕುತಿ;
ಇವೆರಡರ ಅನುಬಂಧವೇ ಭಕುತಿ. ಅದು
ಬೆಳೆಯುವದು ಅವರವರು ಮಾಡುವ
ನಿರಂತರ ಸಾಧನೆಗಳಿಂದ. ಆ
ಸಾಧನೆಗಳ ರಹಸ್ಯವನ್ನು ಬಯಲು
ಮಾಡಲು ಹೊರಟದ್ದೇ ಉಪನಿಷತ್ತುಗಳು.
"ಆರಣಕಮಾವರ್ತಯೇತ್
ಆರಣಕಮಾವರ್ತಯೇತ್" ಎಂಬಂತೆ
ಉಪನಿಷತ್ತುಗಳ ಅಧ್ಯಯನ ಅವಶ್ಯಕ.
ಇಂತಹ ಉಪನಿಷತ್ತುಗಳಲ್ಲಿ ಒಂದಾದದ್ದು
ತಲವಕಾರೋಪನಿಷತ್ತು. ಭಗವತ್ತತ್ವವನ್ನು
ತಿಳಿಯಲು ಬ್ರಹ್ಮ-ರುದ್ರರು ನಡೆಸಿರುವ
ಸಂವಾದವೇ ಈ ಕೇನೋಪನಿಷತ್ತು.

ಕುವರ ಹರನಿಗೆ ಹರಸಿದನು ಹರಿಕುವರ
ಇಂದ್ರಿಯಗಳ ಪ್ರೇರಕನ ಪ್ರೇರಣೆಯ ವಿವರ
ಪಾಪಗಳಿಗೆ ತಲವಾರ ಪುಣ್ಯನಾಮ ತ-ಲವ-ಕಾರ
ಅರ್ಪಿಸುವನಿದ ಗುರುಚರಣಕೆ ಕನ್ನಡದ ಲಿಪಿಕಾರ